वत्सरसहस्रं यावत् मनुष्येष्वस्पृश्ययोनयः । प्रकीर्णपातकिनां बहून-ब्दान् यावत् प्रकीर्णा हिंस्रा क्रव्यदाश्च योनयो भवन्ति ।

## कृच्छ्रप्रत्याम्नायादिधेनुमूल्यादिविचारः ।

पश्चात्तापी पातकी परिषदि गत्वा विदुषः प्रायश्चित्तं याचेत, सति सामर्थ्ये च तदेवाहीनाङ्गं कुर्यात् । अष्टम्यां चतुर्दश्यां च प्राय-श्चित्तं न कार्यम् । प्रायश्चित्तपूर्वदिने च कृतकेशनखादिवापनो घृतं प्राश्य तीर्थस्थाने तिष्ठेद् द्वितीयदिने दशविधं (१)स्नानं कृत्वा प्राय-श्चित्तं कुर्यादित्यादिव्रतग्रहणप्रकारस्तु प्रायश्चित्तेन्दुशेखरादौ विलोक-नीयः । व्रताशक्तौ च कृच्छ्रप्रत्यम्नायभूता धेनवो देयाः । धेनुदाना-सामर्थ्ये सति तन्निष्क्रयोपकल्पितं मूल्यं प्रदेयम् । मूल्यदानाशक्तेन तावन्त उपवासाः कार्याः ।

धनिनां दरिद्राणां च कृते धेनुमूल्यादिव्यवस्थेयं षट्त्रिंशन्मते—

"धेनुः पञ्चभिराढ्यानां मध्यानां त्रिपुराणिका ।
कार्षापणैकमूल्या हि दरिद्राणां प्रकीर्तिताः" ॥ इति ॥

नवप्रसुतिका धेनुराढ्यानां कृते पञ्चपुराणमूल्यलभ्या, मध्यमानां कृते त्रिपुराणलभ्या, दरिद्राणां कृते च (२)कार्षापणैकलभ्येत्यथः ।

---

(१) भस्म-मृत्तिका-गोमय-पञ्चगव्य-गोरजो-धान्य-फल-सर्वौषधि-कु-शोदक-हिरण्यैर्दशविधस्नानानि कार्याणि ।

(२) षोडश पणाः कार्षापणः । आणकचतुष्टयमित्यर्थः ।



पयस्विगोमूल्यं धनिनां कृते पुराणत्रयम्, मध्यमानां कृते पुरा-णद्वयम्, दरिद्राणां कृते च पुराणमेकं ज्ञेयम् । वत्समूल्यमेकं पुराणम्, वृषभमूल्यं च पुराणषट्कम् । यथोक्तं कात्यायनेन—

"द्वात्रिंशत्पणिका गावो वत्सः पौराणिको भवेत्" इति ।

गोमूल्यं द्वात्रिंशत्पणाः पुराणद्वयं, वत्समूल्यं च पुराणमेकमिति सङ्कलने पुराणत्रयं धेनुमूल्यम् । "वृषभः षट्पुराणिकः" इति गौतमव-चनं च । अयं भावः—शूलपाणिना प्रायश्चित्तविवेके ब्रह्महननप्रायश्चि-त्तप्रसङ्गे पयस्विगोमूल्यं चुर्णीत्रयं केवलगोमूल्यं च पुराणमेकमुक्तम् । पुराणैकलभ्यताम्रनिर्मितमुद्राविशेषश्चूर्णीति चूर्णी पुराणमित्यन-र्थान्तरम् । अत्र शूलपाणिकृतप्रायश्चित्तविवेकरीत्या केषाञ्चित्कृच्छ्रा-दीनां प्रत्याम्नायभूता धेनवः संगृह्यन्ते । तथाहि—

चतुर्विंशतिवार्षिकव्रताशक्तौ ३६० धेनवः, २०० धेनवश्च दक्षिणा-र्थं देयाः । द्वादशवार्षिकव्रताशक्तौ १८० धेनवः, १०० धेनवश्च दक्षि-णार्थं देयाः ।

| | |
|---|---|
| मासोपवासव्रताशक्तौ | १५ धेनवः । दक्षिणा च सर्वत्र भिन्ना । |
| पक्षोपवासाशक्तौ | ७॥ धेनवः । |
| चान्द्रायणप्रत्याम्नायाः | ७॥ धेनवः । यत्र चैकमेव चान्द्रायणं तत्राष्टौ । |
| शिशुचान्द्रायणाशक्तौ | ३॥। धेनवः । |
| ऋषिचान्द्रायणाशक्तौ | ३ धेनवः । |
| महासान्तपनाशक्तौ | ६ धेनवः । |
| सान्तपनाशक्तौ | २ धेनू देये । |
| कृच्छ्रातिकृच्छ्राशक्तौ | ६ धेनवः । |
| अतिकृच्छ्रासामर्थ्ये | ३ धेनवः । |

| | |
|---|---|
| सौम्यकृच्छ्रासामर्थ्ये | १ धेनुर्देया । |
| प्राजापत्यकृच्छ्रासामर्थ्ये | १ धेनुर्देया । |
| पराककृच्छ्राशक्तौ | पञ्च धेनवो देयाः । |
| तुलापुरुषकृच्छ्राशक्तौ | २ धेनू देये । |
| तप्तकृच्छ्राशक्तौ | ३॥। धेनवो देयाः । |
| वारुणकृच्छ्राशक्तौ | १ धेनुर्देया । |
| पर्णकृच्छ्राशक्तौ | अर्धधेनुर्देया । |
| द्व्यहसाध्यब्रह्मकूर्चाशक्तौ | पुराणैकलभ्यं काञ्चनं देयम् । |

इत्थमत्र प्रायश्चित्तोपयोगिविषयः सामान्येन निर्दिष्टो विस्तरशस्तु ग्रन्थे विलोकनीय इत्यवदातम् ।

---

अथ प्रायश्चित्तसारोद्धृतग्रन्थानां

## संक्षिप्तपरिचयः ।

अग्निपुराणम्—यदीशानकल्पीयवृत्तमग्निना वसिष्ठाय प्रोक्तं तदग्निपुराणमुच्यते । अत्र ३८१ अध्यायाः । १५४०० श्लोकाश्च । एतत्पुराणप्रथमभागे विष्णोरवताराः वर्णिताः । उत्तरभागे च तान्त्रिकक्रियाकलापः, शैवोपासना, शिवतत्वम् , भूगोलवर्णनम् , राजधर्मः, युद्धविद्या, वेदपुराणादिवृत्तम् , राजवंशावली, आयुर्वेदः, अलङ्कारशास्त्रम् , छन्दःशास्त्रम् , व्याकरणशास्त्रं च संक्षेपेण विवृतम् ।

आदित्यपुराणम्—इदं ग्रन्थकारेण २०६ पृष्ठे समुद्धृतम् । इदमुपपुराणान्तर्गतं च ।



यथोक्तं देवीभागवते उपपुराणसंख्यावासरे—

“ सौरं पाराशरप्रोक्तमादित्यं चातिविस्तरम्” इति

( ३ अ० १६ श्लोके ) ।

आयुर्वेदनिघण्टुः—आयुर्वेदनिघण्टुग्रन्थेष्वयमतिप्राचीनो धन्वन्तरीयनिघण्टुनाम्नापि व्यपदिश्यतेऽसौ । काशीराजश्रीधन्वन्तरिरस्य वक्ता । धन्वन्तरेरनन्तरं केनचित्सम्प्रदायशिष्येण विदुषायं लिखितइति षष्ठवर्गान्तश्लोकतो विज्ञायते । यथा—

“द्रव्यावलिः समुद्दिष्टा धन्वन्तरिमुखोद्गता” इति ।

उमामहेश्वरसंवादः—स्कन्दपुराणान्तर्गतनागरखण्डान्तर्गतः । यत्र भगवता स्कन्देन तत्पुरुषकल्पीयं महेश्वरचरितं नन्दिने प्रोक्तं तत्स्कन्दपुराणम् । अत्र ८१००० श्लोकाः । शङ्करसंहिताप्रामाण्येन स्कान्दे षट् संहिताः पञ्चाशत्खण्डानि चेति ज्ञायते । सनत्कुमारसंहिता, सूतसंहिता, शङ्करसंहिता, वैष्णवसंहिता, ब्राह्मसंहिता, सौरसंहितेति षट्संहिताः । प्रचलितस्कन्दपुराणीयप्रभासखण्डे तु-माहेश्वरखण्डम् ( केदारखण्डम् ), वैष्णवखण्डम् ( उत्कलखण्डम् ), ब्रह्मखण्डम् , काशीखण्डम् , रेवाखण्डम् , प्रभासखण्डं चेति सप्त खण्डानि स्कान्दस्योक्तानि । नारदपुराणे च--अम्बिकाखण्डम् , माहेश्वरखण्डम् , ( अत्रत्यकेदारकुमारिकाखण्डे एव प्राप्येते ), ब्रह्मखण्डम् , प्रभासखण्डं चेति दशोक्तानि खण्डानि । निम्ननिर्दिष्टान्यपि खण्डानि स्कन्दपुराणान्तर्गतानि कथ्यन्ते । यथा—सह्याद्रिखण्डम् , अर्बुदाचलखण्डम् , कनकाद्रिखण्डम् , काश्मीरखण्डम् , कौशलखण्डम् , गणेशखण्डम् , उत्तरखण्डम् , भैरवखण्डम् , मलयाचलखण्डम् , मानसखण्डम् , कालिकाखण्डम् , श्रीमालखण्डम् , पर्वतखण्डम् , सेतुखण्डम् , हालास्यखण्डम् , हिमवत्खण्डम् , महाकालखण्डम् , अग-

सत्यसंहिता, ईशानसंहिता, उमासंहिता, सदाशिवसंहिता, प्रह्लादसंहिता, चेति ।

कूर्मपुराणम्—अस्मिन् ब्राह्मीभागवतीसौरीवैष्णवीसंहितेत्याख्यानि चत्वारि खण्डान्यासन् । किन्त्वधुना ब्राह्मीखण्डमेवोपलभ्यते । यत्कूर्मरूपधरो जनार्दनो लक्ष्मीकल्पीयवृत्तमिन्द्रद्युम्नप्रसङ्गेन शक्रसन्निधौ महर्षिभ्यः प्रोक्तवान् तत्कौर्मं पुराणम् । अत्र ७०००० श्लोकाः । पूर्वभागे ५३ अध्यायाः । उत्तरत्र च ४५ अध्यायाः । यथा—

"यत्र धर्मार्थकाममोक्षाणां मोक्षस्य च रसातले ।
महात्म्यं कथयामास कूर्मरूपी जनार्दनः ॥
इन्द्रद्युम्नप्रसङ्गेन ऋषिभ्यः शक्रसन्निधौ ।
सप्तदश सहस्राणि लक्ष्मीकल्पानुषङ्गिकम्" ॥ (मत्स्यपुराणे)

गारुडम्—यद् गारुडकल्पीयं वृत्तं भगवता विष्णुना गरुडायाभिहितं तद्गरुडपुराणम् । अत्र १८००० श्लोकाः । अस्य द्वे खण्डे । पूर्वखण्डे सृष्टिप्रक्रिया, धर्मकार्यादि, तान्त्रिकप्रक्रिया, ज्यौतिषम् , सामुद्रिकम् , आयुर्वेदः, रत्नपरीक्षाप्रभृति वर्णितानि । उत्तरखण्डे च प्रेतप्रक्रिया प्रदर्शिता । अस्मिन्पुराणे गरुडजन्मापि वर्णितम् ।

चतुर्विंशतिमतम्—एतत्सारभूतश्चतुर्विंशतिमतसंग्रहाख्यो धर्मशास्त्रग्रन्थो भट्टोजिदीक्षितनिर्मितः, काशिकचौखम्बासंस्कृतग्रन्थमालमुद्रितश्च ।

चमत्कारखण्डम्—स्कन्दपुराणान्तर्गतनागरखण्डान्तर्वर्त्तीदम् ।

धर्मविवृतिः—अप्राप्तविवरणा ।

नन्दिपुराणम्—इदं नन्दिना प्रोक्तमुपपुराणम् । यथाऽष्टादश पुराणानि तथैवाष्टादशोपपुराणान्यपि । यथा च सूतसंहितायामुपपुराणनामानि—



"अन्यान्युपपुराणानि मुनिभिः कीर्तितानि तु ।
आद्यं सनत्कुमारेण प्रोक्तं वेदविदां वराः ॥
द्वितीयं नारसिंहाख्यं तृतीयं नान्दमेव च ।
चतुर्थं शिवधर्माख्यं दौर्वासं पञ्चमं विदुः ॥
षष्ठं तु नारदीयाख्यं कापिलं सप्तमं विदुः ।
अष्टमं मानवं प्रोक्तं ततश्चोशनसेरितम् ॥
ततो ब्रह्माण्डसंज्ञं तु वारुणाख्यं ततः परम् ।
ततः कालीपुराणाख्यं विशिष्टं मुनिपुङ्गवाः ॥
ततो वासिष्ठलैङ्गाख्यं प्रोक्तं माहेश्वरं परम् ।
ततः साम्बपुराणाख्यं ततः सौरं महाद्भुतम् ॥
पाराशरं ततः प्रोक्तं मारीचाख्यं ततः परम् ।
भार्गवाख्यं ततः प्रोक्तं सर्वधर्मार्थसाधकम्" ॥ इति ।

देवीभागवतोक्तान्युपपुराणनामानि भिद्यन्ते । तानि च तत्रैव (३ अ. १३—१६ श्लो. ) द्रष्टव्यानि ।

नागरखण्डम्—स्कन्दपुराणान्तर्गतम् । अत्र नागरब्राह्मणानामुत्पत्तिरपि वर्णिता ।

नारदपुराणम्—बृहत्कल्पीयान् धर्मान् यत्रारदोऽब्रवीत्तन्नारदीयं महापुराणम् । अत्र २५००० श्लोकाः । अस्मिन् विष्णुस्तुतिः, वैष्णवाख्यानादि, हरिभक्तिः, वैष्णवानां धर्मा आचरणानि च वर्णितानि । बम्बईमुद्रितं नारदीयं पुराणं प्राचीनत्वे न विश्वासार्हम् ।

पद्मपुराणम्—पाद्मकल्पोक्तं वृत्तमधिगत्य यत्रोक्तं तत्पद्मपुराणम् । अत्र ५५००० श्लोकाः । अत्र-सृष्टि-भूमि-स्वर्ग-पाताल-उत्तराख्यानि पञ्च खण्डानि । तत्र सृष्टिखण्डे-ब्रह्माण्डसर्गः, भृगुप्रभृतिमुनिवंशराजवंशादि, पुष्करतीर्थमाहात्म्यं च प्रतिपादितम् । भूमिखण्डे १२७ अध्यायाः । अत्र तीर्थमहर्षिचरितादिवर्णनम् , सप्तद्वीपादिभूभागव-

र्णनं च । स्वर्गखण्डे वैकुण्ठलोकवर्णनम्, वर्णाश्रमधर्मप्रतिपादनम्, आख्यानानि च । पातालखण्डे--पातालनागलोकवर्णना, रामचन्द्राख्यानम्, कृष्णबाललीला, विष्णुभक्तिमाहात्म्यं च । उत्तरखण्डे च शिवः पार्वतीं प्रति विष्णुभक्तिं वैष्णवचिह्नधारणं विष्णोरवतारान् विष्णुमूर्तिनिर्माणं चोवाच ।

पाराशरस्मृतिः—कलियुगधर्मप्रधानेयं स्मृतिः । यथोक्तम्—

"कृते तु मानवाः प्रोक्तास्त्रेतायां गौतमाः स्मृताः ।
द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः" ॥

अत्र द्वादशाध्यायाः । पराशरमुनिना व्यासाय प्रोक्तेयम् । अत्र माधवाचार्येण बुक्कभूपमन्त्रिणा पाराशरमाधवीयाख्या बृहती टीका विरचिता ।

परिशिष्टम्—अप्राप्तविवरणम् ।

प्रभासखण्डम्—स्कन्दपुराणान्तर्गतम् । अत्र प्रभासक्षेत्रस्य (सौराष्ट्रदेशान्तर्वर्तिन्याः श्रीद्वारिकापुर्याः) माहात्म्यवर्णनम् ।

ब्रह्मपुराणम्--ब्रह्मणा मरीचये प्रोक्तम् । १३००० श्लोकाः । अस्य पूर्वखण्डे देवासुरोत्पत्तिः, सूर्यचन्द्रवंशयोर्वर्णनम्, भूगोलखगोलवर्णनं च । उत्तरखण्डे चोत्कलदेशीयतीर्थवर्णनम् । अत्र जगदीशमन्दिरसूर्यमन्दिरयोरुल्लेखोऽपि वर्तते । योगप्रक्रिया, युगधर्मः, वर्णाश्रमधर्मः, तीर्थविवरणम्, गङ्गोत्पत्तिश्च वर्णिता ।

ब्रह्मवैवर्तपुराणम्--यत्र सावर्णिना नारदाय रथन्तरकल्पीयवृत्तमधिकृत्य कृष्णमाहात्म्यमुक्तं तथा ब्रह्मवराहोदन्तश्च वर्णितस्तद् ब्रह्मवैवर्तपुराणम् । अत्र १८००० श्लोकाः । ब्रह्म-प्रकृति-गणेश-कृष्णजन्माख्यानि चत्वारि खण्डानि । अत्र वृन्दावनीयश्रीराधाकृष्णलीला विशेषेण वर्णिता । सावित्री-सुरभि-स्वाहा-स्वधा सुरथदुर्वासोऽभिशापकार्तवीर्य-परशुरामादीनामाख्यानानि कथितानि ।



भरद्वाजगृह्यसूत्रम्--इदं सूत्रं कृष्णयजुर्वेदिनाममुद्रितं च ।

भविष्योत्तरम्--भविष्यपुराणोत्तरखण्डरूपम् । यत्र चतुर्मुखः सूर्यमाहात्म्यमधिकृत्याघोरकल्पीयवृत्तप्रसङ्गेन मनवे जगत्स्थिति भूतग्रामस्वरूपं च कथयामास तद्भविष्यपुराणम् । भविष्यचरिताधिक्याच्च भविष्यमित्याख्या । अत्र १४५०० श्लोकाः । भविष्योत्तरश्लोकसङ्ख्या चातिरिक्ता ।

मनुस्मृतिः—भृगुप्रोक्ता सर्वप्राचीनेयं स्मृतिः । अत्र द्वादशाध्यायाः २६८५ श्लोकाश्च । भगवता सूर्यपुत्रेण मनुना संगृहीता कृतयुगीयधर्मशास्त्ररूपेयम् । अत्राष्टौ टीकाः । सर्वस्मृत्यपेक्षयाधिकं प्रामाण्यमस्याः । तथोक्तम्—

"मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते" इति ।

मार्कण्डेयपुराणम्—मकण्डुसूनुना मुनिना मार्कण्डेयेन प्रोक्तमिदम् । अत्र ९००० श्लोकाः । दुर्गासप्तशतीमन्त्रा अप्यत्रत्या एव । अस्मिन् पुराणे वृत्रासुरवधः, बलदेवप्रायश्चित्तम्, नहुषययातिहरिश्चन्द्रोपाख्यानानि, वसिष्ठविश्वामित्रकलहः, सृष्टिप्रक्रिया, मन्वन्तराणि च वर्णितानि ।

मिताक्षरा—इयं याज्ञवल्क्यस्मृतिटीका । असौ टीका राष्ट्रकूटवंशीयविक्रमादित्यमहाराजाश्रितेन विज्ञानेश्वरेणैकादशशताब्द्यां विरचिता । अत्रत्यो व्यवहाराध्यायोऽधिकं प्रमाणीभूतः । अत्र विश्वेश्वरकृता सुबोधिनी बालंभट्टकृता लक्ष्मीः मित्रमिश्रकृता वीरमित्रोदयाख्या व्याख्याः सन्ति ।

याज्ञवल्क्यस्मृतिः—इयं याज्ञवल्क्यमुनिप्रोक्ता । अत्र १००९ श्लोकाः ।

आचार-व्यवहार-प्रायश्चित्ताख्यास्त्रयोऽध्यायाः । मनुस्मृतिं विहाय सर्वस्मृत्यपेक्षयाधिकं प्रामाण्यमस्याः । अत्र विश्वरूपकृता बालक्रीडा, अपरार्ककृता टीका, शूलपाणिकृता दीपकलिका चेति व्याख्यात्रयमुपलभ्यते ।

राजनिघण्टुः—अयमायुर्वैदिकशब्दानां कोशो नरहरिणा निर्मितः । अत्र कर्णाटकमहाराष्ट्रभाषाभ्यां द्रव्याणां परिचयो लिखितः । यथोक्तम्—

"व्यक्तिः कृतात्र कर्णाटमहाराष्ट्रीयभाषया ।
आन्ध्रलाटादिभाषास्तु ज्ञातव्यास्तद्द्वयाश्रयाः" ॥ इति

रेवाखण्डम्—स्कन्दपुराणान्तर्गतम् । स्कन्दपुराणविवरणं दत्तपूर्वम् ।

वाक्यमीमांसा—अप्राप्तविवरणा ।

वामनपुराणम्—त्रिविक्रमकथामवलम्ब्य यत्र चतुर्मुखस्त्रिवर्गमुवाच तद्वामनं पुराणम् । अत्र १०००० श्लोकाः । अत्र वामनावतार-दानमहात्म्य—देवदानवसंग्रामः-महिषासुरनाशः—दक्षयज्ञ—मदनदहन—शिवपार्वतीविवाह-कुमारजन्मप्रभृतिशिवकल्पीयवृत्तवर्णनम् । उत्तरभागो बृहद्वामनाख्यस्तत्र माहेश्वरी-भागवती-सौरी-गाणेश्वरीति चतस्रः संहिताः सन्ति ।

वायुपुराणम्—यत्र श्वेतकल्पीयं रुद्रमाहात्म्यं वायुरब्रवीत्तद्वायुपुराणम् । अत्र २४००० श्लोकाः । शिवपुराणान्तर्गता वायुसंहितैव वायुपुराणमिति केचित् । इदं पुराणं चतुर्धा विभक्तम् । तत्र प्रथमभागे—ब्रह्माण्डसर्गो जीवसर्गश्च वर्णितः । द्वितीये ऋषिवंशावलिः, कल्पादि, ब्रह्माण्डवर्णनम्, मन्वन्तराणि, शैवाख्यानादि । तृतीये पृथक् २ जीवानां वर्णनम्, चन्द्रसूर्यवंशीयानां राज्ञां वंशवर्णनम् । चतुर्थे च—योगप्रक्रिया, शिवमाहात्म्यं च । मुद्रितवायुपुराणे तु द्वौ भागौ ६१+५०=१११ अध्यायाश्च सन्ति ।



वायुसंहिता—इयं शिवपुराणान्तर्गता । बम्बईमुद्रितशिवपुराणे द्वादशसंहिताः सन्ति ।

विष्णुधर्मोत्तरम्—विष्णुपुराणोत्तरखण्डरूपं बम्बईमुद्रितं च । यत्र पराशरो वराहकल्पवृत्तमाह स्म तद्विष्णुपुराणम् । विष्णुपुराणे २३००० श्लोकाः ।

विष्णुस्मृतिः—यजुर्वेदीयकाठकशाखायाः यो धर्मसूत्रग्रन्थ आसीत्तमवलम्ब्येयं स्मृतिर्विनिर्मिता । इयं मुद्रिता । अत्र धर्माधिकारिनन्दपण्डितेन वैजयन्ती टीका कृता । ९६ अध्यायाः । अत्र श्लोकाः सूत्राण्यपि । लघुविष्णुस्मृतिस्त्वन्या । तत्र ५ अध्यायाः, १०५ श्लोकाश्च । वर्णाश्रमधर्मा एवात्र निरूपिताः ।

शिवधर्मोत्तरम्—शिवपुराणपरिशिष्टम् ।

षट्त्रिंशन्मतम्—अप्राप्तविवरणम् ।

सुबोधिनी—इयं विश्वेश्वराचार्यकृता याज्ञवल्क्यस्मृतिटीकामिताक्षराव्याख्या । इयं टीका मुद्रिता बम्बईगवर्नमन्टसंस्कृतग्रन्थमालायाम् ।

सुश्रुतः—सुश्रुतमहर्षिणा ग्रथितोऽयमायुर्वेदग्रन्थः काशीराजेन धन्वन्तरिणा दिवोदासेनोपदिष्टः । आयुर्वेदे कायशल्याख्ये द्वे मुख्ये चिकित्से । तत्र कायचिकित्साप्रधानं चरकतन्त्रम् । शल्यचिकित्साप्रधानं च सुश्रुततन्त्रम् । अत्र सूत्रस्थाने ४६ अ०, निदानस्थाने १६ अ०, शारीरकस्थाने ९ अ०, चिकित्सितस्थाने ४० अ०, कल्पस्थाने ८ अ०, उत्तरतन्त्रे च ६६ अध्यायाः । सर्वेषामेतेषां सङ्कलनेन १८४ अध्यायाः सन्ति । आयुर्वेदे चरकसुश्रुतवाग्भटाख्या ग्रन्थत्रयी सुप्रसिद्धा ।

स्कान्दम्—स्कन्दपुराणम् । एतद्विवृतपूर्वम् ।

स्मृतिसंग्रहः—स्मृत्यर्थसारानन्तरं निर्मितः । ११५०-१२०० ईशवीये समये स्मृत्यर्थसारो निर्मितः ।

स्मृत्यर्थसारः—ग्रन्थोऽयं श्रीधरेण ११५०-१२०० ई० वर्षाभ्यन्तरे निर्मितो मुद्रितश्च ।

हारीतस्मृति—इयं लघुबृहद्रूपतया द्विधा । द्विविधाप्यसौ मुद्रिता । बृहद्धारीतस्मृतौ च सप्ताध्यायाः । १४७ श्लोकाश्च ।

## उपसंहारः ।

अथैतद्ग्रन्थमुद्रणं काशिकराजकीयसरस्वतीभवनाख्यसंस्कृतपुस्तकालयीयपुस्तकमवलम्ब्य सम्पादितम् । पुस्तकमिदमत्यन्तमशुद्धं कोटदृष्टमतिप्राचीनं जीर्णं शीर्णमसम्बद्धपाठसंयुक्तमिति सम्पादनेऽस्य महत्कष्टमनुभूतम् । अत एवास्य कृतप्रयत्नेऽपि सम्पादने प्रमादकृता विस्मृतिजनिता भ्रान्तिसमुद्भूता अज्ञानहेतुकाश्च दोषाः प्रस्फुरेयुरिति सम्भाव्यते । ते च विद्वद्भिः क्षन्तव्या इत्यभ्यर्थना ।

येषामनुकम्पयैवेदं ग्रन्थसम्पादनं तेषु काशिकराजकीयसंस्कृतविद्यालयाध्यक्षेषु गुरुवर्येषु महामहोपाध्यायश्रीगोपीनाथकविराज एम. ए. महाभागेषु, जयपुरराजकीयसंस्कृतपाठलयाध्यक्षेषु व्याकरणाचार्यमहामहोपाध्यायश्रीगिरिधरशर्मचतुर्वेदमहोदयेषु च मामकीना स्वाभाविकी श्रद्धा समुल्लसतु ।

भूतपूर्वकाशिकराजकीयपुस्तकालयाध्यक्षाणां साम्प्रतं काशिकराजकीयपरीक्षाध्यक्षाणां येषां डाक्टरश्रीमङ्गलदेवशास्त्रि एम० ए० डी० फिल० महाभागानां सरस्वतीभवनपुस्तकालयाधिपत्ये मयान्वेषणसम्पादनादिकार्यप्रौढिरासादिता तेषामनुक्षणं वर्धमानमभ्युदयं समीहतेऽसौ—

| | |
|---|---|
| राजमातृचांपावतीमन्दिरम्, | कथाभट्टो |
| जयपुरम् । | नन्दकिशोरशर्मा, |
| १९९१ वैक्रमाब्दीयोपाकर्मदिनम् । | (साहित्याचार्य—रिसर्चस्कालर) |

# अथ ग्रन्थविषयांशप्रतिपादनम् ।

विषयांशाः— पृष्ठानि ।

| विषयांशाः— | पृष्ठानि । |
| --- | --- |
| ब्रह्मचारिकर्तृकस्त्रीगमने प्रायश्चित्तम् | १२० |
| स्त्रीसम्भोगमन्तरा रेतोविसर्गे प्रायश्चित्तम् | १२१ |
| गुरुप्रेषितशिष्यमरणे गुरोः प्रायश्चित्तम् | १२५ |
| यज्ञोपवीतविनाशे प्रायश्चित्तम् | १२५ |
| ब्रह्मचारिणो मांसभक्षणे प्रायश्चित्तम् | १२६ |
| संन्यासिनो गार्हस्थ्यस्वीकारे प्रायश्चित्तम् | १२३ |
| सुतादिविक्रयप्रायश्चित्तम् | १२६ |
| अथाज्ययाजनप्रायश्चित्तम् | १२७ |
| द्रुमच्छेदप्रायश्चित्तम् | १२९ |
| द्यूतादिप्रायश्चित्तम् | १३० |
| अनाश्रमित्वे प्रायश्चित्तम् | १३२ |
| असत्प्रतिग्रहे प्रायश्चित्तम् | १३२ |
| अभक्ष्यभक्षणप्रायश्चित्तम् | १३४ |
| जातिदुष्टलशुनगृञ्जनादिशाकविशेषभक्षणे प्रायश्चित्तम् | १३४ |
| नीलीभक्षणप्रायश्चित्तम् | १३६ |
| गृञ्जनशब्दस्य गर्जरार्थत्वनिरासः | १३७-१३८ |
| निषिद्धपशुक्षीरपाने प्रायश्चित्तम् | १३९ |
| स्वभावदुष्टमांसभक्षणे प्रायश्चित्तम् | १४० |
| वराहशूकरकुक्कुटकाकादिमांसभक्षणे प्रायश्चित्तम् | १४१ |
| केशकीटनखादिभक्षणे प्रायश्चित्तम् | १४१ |
| मेध्यामेध्यविचारः | १४२ |
| विडालाद्युच्छिष्टभक्षणे प्रायश्चित्तम् | १४२ |
| ब्राह्मणाद्युच्छिष्टभक्षणे प्रायश्चित्तम् | १४३ |
| मातृभगिनीप्रभृतिसहभोजननिषेधः | १४४ |
| निषिद्धान्नभक्षणे प्रायश्चित्तम् | १४५ |
| संसर्गस्वभावक्रियादुष्टान्नभक्षणे प्रायश्चित्तम् | १४७ |
| म्लेच्छादिकूपजलपाने प्रायश्चित्तम् | १४७ |



| विषयांशाः— | पृष्ठानि । |
| --- | --- |
| कालदुष्टभोजने प्रायश्चित्तम् | १४८ |
| हस्तादानादिक्रियादुष्टभक्षणे प्रायश्चित्तम् | १५० |
| पर्यायदानदुष्टान्नभोजने प्रायश्चित्तम् | १५० |
| श्राद्धान्नभोजने प्रायश्चित्तम् | १५० |
| जातिभ्रंशकरादिप्रायश्चित्तम् | १५२ |
| प्रकीर्णपातकप्रायश्चित्तम् | १५५ |
| अभिशापप्रायश्चित्तम् | १५८ |
| रहस्यपातकप्रायश्चित्तम् | १६१ |
| रहस्यकृतब्रह्महत्याप्रायश्चित्तम् | १६४ |
| सुरापानप्रायश्चित्तम् | १६५ |
| सुवर्णस्तेयप्रायश्चित्तम् | १६६ |
| रहस्योपपातकप्रायश्चित्तम् | १६८ |
| कृच्छ्रचान्द्रायणादिव्रतलक्षणानि | १७० |
| पादकृच्छ्रलक्षणम् | १७० |
| प्राजापत्यकृच्छ्रः | १७२ |
| अतिकृच्छ्रः | १७६ |
| वृद्धिकृच्छ्रः | १७७ |
| कृच्छ्रातिकृच्छ्रः | १७७ |
| सौम्यकृच्छ्रः | १७७ |
| पराककृच्छ्रः | १७८ |
| तुलापुरुषकृच्छ्रः | १७८ |
| वारुणकृच्छ्रः | १८२ |
| अघमर्षणकृच्छ्रः | १८२ |
| यज्ञकृच्छ्रः | १८३ |
| देवकृच्छ्रः | १८३ |
| पर्णकृच्छ्रः | १८४ |
| फलकृच्छ्रः | १८५ |

## अस्मिन्ग्रन्थे प्रमाणत्वेनोपन्यस्ता

# ग्रन्था ग्रन्थकाराश्च ।

### ( १ ) ग्रन्थाः—

## ( २ ) ग्रन्थकाराः—

श्रीदलपतिमहाराजविरचितो

# नृसिंहप्रसादः ।

## प्रायश्चित्तसारः ।

अनन्तदेवेशकिरीटकोटिरत्नत्विषा रञ्जितपादपद्मम् ।
कारुण्यनेत्रं कमलाकलत्रं लक्ष्मीनृसिंहं हृदि भावयामि ॥

नैमित्तिकं धर्मजातं दलाधिपमहीभुजा ।
तत्प्रायश्चित्तसारेण प्रोच्यते लोकतुष्टये ॥
तत्र प्रायश्चित्तसारे परिभाषा विलिख्यते ।
सन्ति प्रकरणान्यत्र बहूनि विविधानि च ॥
सभानिरूपणं चाद्यं पर्षदो गमनं ततः ।
प्रायश्चित्तप्रकारस्तु प्रोच्यते तदनन्तरम् ॥
व्रतप्रयोजनं तस्मात् सुनिषिद्धोपवर्णनम् ।
ब्रह्महत्याव्रतं पूर्वं मद्यपस्य ततः परम् ॥
सुवर्णहरणे पश्चात्तथा गुर्वङ्गनागमे ।
संसर्गिणां ततः सर्वं सविशेषनिरूपणम् ॥
व्रतं ततो गोवधस्य व्रात्यतायास्ततः परम् ।
स्तेयव्रतं ततः पश्चाद् ऋणानां चानपक्रिया ॥

अपण्यविक्रये पश्चात् प्रायश्चित्तमुदीर्यते ।
परिवित्तिव्रतं पश्चात् भृतकाध्यापने तथा ॥
पारदार्यव्रतं पश्चात् प्रसङ्गादागतं ततः ।
क्षत्रियादेर्वधे किञ्चित् प्रायश्चित्तं ततः परम् ॥
सङ्करीकरणे पश्चात् नास्तिक्ये तदनन्तरम् ।
अवकीर्णिव्रतं पश्चात् नित्यत्यागादिषु स्फुटम् ॥
प्रत्यावृत्तावाश्रमस्य धान्यादिस्तेयलक्षणे ।
अनाश्रमतया वासे सामान्यस्त्रीनिषेवणे ॥
परान्नपरिपुष्टत्वमसद्भ्यश्च प्रतिग्रहे ।
अभक्ष्यभक्षणे तावत् तत्प्रसङ्गागतेऽपि च ॥
जातिभ्रंशकरे पश्चात् प्रकीर्णक इतः परम् ।
रहस्यव्रतमन्यत्तु कृच्छ्रादीनां च लक्षणम् ॥
ततः परं कर्मणां हि विपाकः सम्यगुच्यते ॥ इति ।

## अथ प्रायश्चित्तशब्दविचारः ।

अभिहिता वर्णाश्रमगुणधर्माः । इदानीं तदतिक्रमनिमित्तदुरितापूर्वनिराकरणकारणभूतसमर्थः प्रायश्चित्तापरपर्यायो नैमित्तिकधर्मोऽभिधीयते । ननु किमिदं नित्यं काम्यं नैमित्तिकं चेति भवति सन्देहः । तत्र नित्यत्वं तावदकरणे दोषश्रवणात् । अकरणे दोषः—

"चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये ।
निन्द्यैर्हि लक्षणैर्युक्ता जायन्तेऽनिष्कृतैनसः" ॥

इति मनुस्मृतेः प्रतीयते । अनिष्कृतैनस इति छेदः । अन्यथा



विरोधात् । तथा काम्यत्वं च प्रतीयते । पापक्षयलक्षणफलापेक्षयानुष्ठीयमानत्वात् । यथा कृष्यादिकं फलमनुष्ठीयमानकारीर्यादेः । तथा नैमित्तिकत्वं च प्रतीयते गृहदाहनिमित्तप्रवृत्तक्षामवतीष्टिवत् । भवति त्रेधा प्रतिभानात् सन्देहः ।

अत्राभिधीयते । प्रायश्चित्तशब्दो योगरूढिभ्यां प्रत्यवायनिवर्त्तनसमर्थधर्मविशेषवचनः । अनुतापिनः पापिनः संयुक्तं तपः प्रायश्चित्तमिति ।

"प्रायो नाम तपः प्रोक्तं चित्तं निश्चयमुच्यते ।
तपो निश्चयसंयुक्तं प्रायश्चित्तं तदुच्यते" ॥

इत्याङ्गिरसः स्मरणात् ।

ततः प्रायश्चित्तशब्दः पापक्षयार्थे नैमित्तिके कर्मविशेषे रूढः । एवं सर्वत्र निमित्तमेवोपजीव्य प्रायश्चित्तविधानात् । निमित्तोपजीवनं च "ब्रह्महा द्वादशाब्दं व्रतं चरेत्" इत्यादिषु स्पष्टमिष्टम् ।

न चास्य नित्यता तल्लक्षणाभावात् । नियतनिमित्तं नित्यमिति तल्लक्षणास्वीकारात् । फलश्रुतेः काम्यत्वमित्यपि न शोभते । फलश्रुतेर्जातेष्टिवन्न्यायेन नैमित्तिकेऽप्युपपत्तेः । तस्यापि फलस्य नियोज्यविशेषणत्वेनाश्रुतस्य न काम्यतापादकतेति न प्रतिष्ठान्त ?-समजातिवादितापि । तस्मादुपात्तं प्रत्यवायपरिहारार्थं प्रायश्चित्तमिति सिद्धम् ।

अत्र विशेषो योगिनाऽभिहितः—

"प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् ।
कामतो व्यवहार्यस्तु वचनादिह जायते" ॥ इति ।

अयमाशयः । द्विविधं हि पापं कामकृतमकामकृतं च । तत्राकामकृतं पापं प्रायश्चित्तादिनापैति गच्छति । कामकृते तु पापे प्रायश्चित्तादिना व्यवहारार्थतामात्रं संपद्यते । दृश्यते हि तत्रापि प्रायश्चित्तम् । तेन न सर्वथा पापापगम इति ।

ननु—

"इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम् ।
कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते" ॥

इति मनुवचनात् कामकृते प्रायश्चित्ताभावात् कथं व्यवहार्यता ।
उच्यते । दृश्यते हि तत्रापि प्रायश्चित्तम्—

"विहितं यदकामानां कामात्तद्द्विगुणं भवेत्" ॥

इति वचनात् । तथा—

"यः कामतो महापापं नरः कुर्यात् कथञ्चन ।
न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते" ॥ इति ।

ततः कामकृते पतनीये कर्मणि व्रतेन व्यवहार्यतामात्रम् । न पापलेपक्षयः । अकामकृते तूभयमपि नेति न पापक्षयाभावे व्यवहार्यत्वाभाव इति वाच्यम् । शक्त्यन्तराप्रतिबन्धेऽपि शक्त्यन्तरप्रतिबन्धात् ।

अयमाशयः पापस्य द्वे शक्ती भवतः । व्यवहारनिरोधिका नरकोत्पादिका च । तत्र कामकृते नरकोत्पादिकाया अप्रतिबन्धेऽपि व्यवहारनिरोधिकायाः प्रतिबन्धात् , अकामकृतपापे प्रायश्चित्तादुभयशक्तिनिरोध इति सर्वमनवद्यम् ।



## अथ परिषत्सभ्यविवेचनम् ।

तत्र प्रायश्चित्तमभिधीयते । तत्र योगी—

"चत्वारो वेदधर्मज्ञा पर्षत्त्रैविद्यमेव वा ।
सा ब्रूते यं स धर्मः स्यात् देको वाऽध्यात्मवित्तमः" ॥ इति ।

वेदशास्त्रविदः । तिस्रो विद्या ऋग्यजुस्सामात्मिकाः, तत्समूहस्त्रैविद्यम् । तेन च विद्यात्रयाध्यापकास्त्रयो ब्राह्मणा लक्ष्यन्ते । आत्मानमधिकृत्य प्रवृत्तं शास्त्रमध्यात्मम् ।

धर्मविवृतौ—

"क्षत्रियो ह्यथ वैश्यो वा शूद्रो वा न कथञ्चन ।
प्रायश्चित्तविधानं हि कुर्वन्तीति विदुर्बुधाः" ॥ इति ।
"अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।
सहस्रशतयुक्तानां पर्षत्त्वं नोपपद्यते ॥
पातके च शतं पर्षत् सहस्रं सहसादिषु ।
उपपातकेषु पञ्चाशत् स्वल्पे स्वल्पा तथा भवेत्" ॥ इति ।

अनेकैर्विद्वद्भिर्मिलित्वा विचार्य प्रायश्चित्तं देयमिति शतादिशब्दतात्पर्यम् ।

मनुस्तु ब्रह्मचार्यादीनां त्रयाणामाश्रमिणां पर्षत्त्वमाह—

"त्रैविद्यो हेतुकस्तर्की नैरुक्तो धर्मपाठकः ।
त्रयश्चाश्रमिणः पूर्वे पर्षदेषा दशावरा" ॥ इति ।

हेतुकोऽनुमानज्ञः । तर्की सति संशये एकस्मिन् कल्पे प्रामाणिकः ।

अङ्गिराः—

"चतुर्विधं विकल्पं च अङ्गविद्धर्मपाठकः ।
त्रयश्चाश्रमिणो वृद्धा पर्षदेषा दशावरा ॥
चतुर्णामपि वर्णानां पारगा ये द्विजोत्तमाः ।
यथाक्रमं विभाव्याङ्गैश्चातुर्विध्यमिति स्मृतम् ॥
धर्मस्य पर्षदश्चैव प्रायश्चित्तक्रमस्य च ।
त्रयाणां यः प्रमाणज्ञः स विकल्पी भवेद् द्विजः ॥
शब्दे छन्दसि कल्पे च शिक्षायां च मनुष्विति ।
ज्योतिषामयनं चैव सनिरुक्ताङ्गविद्भवेत् ॥
वेदविद्याव्रतस्नातः संन्यसेद्यो जितेन्द्रियः ।
अनेकधर्मशास्त्रज्ञः प्रोच्यते धर्मपाठकः ॥
ब्रह्मचर्याश्रमादूर्ध्वं वृद्धा आश्रमिणस्त्रयः ।
वदेयुस्तस्य ते धर्मान्ये मया परिकीर्तिताः" ॥

## अथ परिषदुपस्थानम् ।

मनुः—

"प्रायश्चित्तीयतां प्राप्य दैवात्पूर्वकृतेन वा ।
न संसर्गं व्रजेत्सद्भिः प्रायश्चित्ते द्विजेऽकृते" ॥

दैवाद्दैववशात् इहजन्मकृतपापिनः पूर्वकृतेन च क्षयित्वश्यावदन्तत्वाद्यनुमतेन तदा कुनखिश्यावदन्तादयः कुनखादीनुत्पादयित्वा "कुनखी श्यावदन्तश्च कृच्छ्राद् द्वादशरात्रं व्रतं चरेत्" इति वसिष्ठाद्यु-



क्तप्रायश्चित्तं कुर्युः । केवलकुनखाद्यननुभूतास्तु सुवर्णस्तेयादिनिमित्तम् । तदा क्षयित्वे रोगनिमित्ताहानादिरूपप्रायश्चित्तमेव । न तु निदानभूतब्रह्महत्यादिप्रायश्चित्तम् । उक्तं चैतच्चरमफलविनाश्यं हि कर्म । रोगादीनि च चरमफलानि । इदं हि मिताक्षराटीकायां सुबोधिन्यां प्रायश्चित्ताध्याये विस्तरेण प्रपञ्चितम् ।

अङ्गिराः—

"उपस्थितस्तु न्यायेन व्रतादेशनमर्हति ।
कृते निःसंशये पापे न भुञ्जीतानुपस्थितः ॥
भुञ्जानो वर्द्धयेत्पापमसत्यं पर्षदि ब्रुवन् ।
शंसेत्त्वभीतो भोक्तव्या यावत्कार्यस्य निष्कृतिः ॥
प्रमादश्च न कर्तव्यो यथैवासंशये तथा ।
कृत्वा पापं न गूहेत गूहमानस्य वर्द्धते ॥
प्रायश्चित्ते समुत्पन्ने ह्रीमान् सत्यपरायणः ।
मृदुरार्जवसंपन्नः शुद्धिं याचेत मानवः ॥
सचैलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः ।
क्षत्रियो वाथ वैश्यो वा परिषद्युपतिष्ठति ॥
उपस्थाय ततः शीघ्रमार्तिमान् धरणीं व्रजेत् ।
गात्रैश्च शिरसा चैव न च किञ्चिदुदाहरेत् ॥
ततस्ते प्रणिपातेन दृष्ट्वा तं समुपस्थितम् ।
वृद्धाः पृच्छन्ति किं कार्यमुपविश्याग्रतः स्थितम् ॥
किं कार्यं का च ते पीडा किं वा मृगयसे द्विज ।
तत्त्वतो ब्रूहि तत्सर्वं समीहि गतिरात्मनः ॥

एवं सर्वमनुज्ञातः सर्वं ब्रूयादशेषतः" । इति ।

"पापमाख्यापायेत्पापी दत्त्वा धेनुं तथा वृषम्" ॥ इति च ।

विष्णुः—

"पादव्रतं वस्त्रं कृत्वार्द्धे तैलकाञ्चनम् ।
पादहीने गां कृच्छ्रे गोमिथुने" इति ॥

## अथ व्रतादेशनम् ।

"तेषां निवेदिते कार्ये तूत्सार्यो हि स कार्यवान् ।
तस्मिन्नुत्सारिते विप्रे ये यथा धर्मपाठकाः ॥
ते तथा तत्र कल्पेषु विमृशन्तः परस्परम्" । इति ।

तत्र देवलः—

"कृच्छ्राणां दापको राजा निर्देष्टा धर्मपाठकः ।
अपराधी प्रयोक्ता च रहिताः कृच्छ्रपालकाः ॥
राजा कृच्छ्राणां दापकः । प्रायश्चित्तनिर्देष्टा धर्मपाठकः ।

वृद्धशातातपः—

"यद्विना धर्मशास्त्रेण प्रायश्चित्तं विधीयते ।
नैव शुद्धिं तदाप्नोति प्रायश्चित्ते कृतेऽपि सः ॥
अदृष्ट्वा धर्मशास्त्राणि प्रायश्चित्तं वदन्ति ये ।
प्रायश्चित्ती भवेत् पूतस्तत्पापं पर्षदं व्रजेत् ॥
पश्चात् कार्यानुसारेण शक्त्या कुर्युरनुग्रहम्" ॥

मातापितृशुश्रूषादि कार्यान्तरमिष्टम् । तत्र व्रतग्रहणपूर्वदिने



सायङ्काले पर्षदुपदिष्टप्रकारेण प्रायश्चित्तं सङ्कल्प्य परेद्युस्त्रिषवणस्नानप्रातर्होमाद्यङ्गसहितं व्रतमनुष्ठातुमारम्भं कुर्यात् ।

यमः—

"पश्चात्तापो निवृत्तिश्च स्नानं चाङ्गतयोदितम् ।
नैमित्तिकानां सर्वेषां व्रतानां विधिपूर्वकम् ॥
तेनैव बहिःशालाग्नौ जुहुयादाहुतीः पृथक् ।
श्राद्धं कुर्याद्व्रतान्ते च गोहिरण्यादिदक्षिणाम्" ॥ इति

अत्र विशेषः—

"केशानां नास्ति नारीणां वपनं व्रतयज्ञयोः ।
गोवधादिषु सर्वेषु छेदयेदङ्गुलित्रयम् ॥
सधवानां तु नारीणामलङ्कराय सर्वदा ।
केशसन्धारणं प्रोक्तं प्रायश्चित्ते द्विजोत्तम" ॥

विधवानां तु वपनमेव ।

"विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनम् ।
ऋते महापातकिनो गोहन्तुश्चावकीर्णिनः" ॥ इति ।
"राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः ।
केशसंरक्षणार्थं च द्विगुणं व्रतमाचरेत्" ॥ इति ।

राजराजपत्नीविद्वद्विप्रैर्द्विगुणं व्रतं कार्यं दक्षिणापि द्विगुणा देयेति तात्पर्यात् ।

## अथ पातकभेदाः ।

तत्र निषिद्धाचरणादिकं प्रायश्चित्तनिमित्तम् । निषिद्धानि च ब्रह्महननमद्यपानब्राह्मणसुवर्णाहरणगुरुभार्याभिगमनवर्षपर्यन्ततत्संसर्गरूपञ्चमहापातकानि ।

ब्रह्महत्यासमानि यागस्थनृपवैश्यगर्भिणीशरणागतसुहृन्मातृवधगुरुविषयज्ञानाज्ञानमिथ्याभिशंसनगुर्वधिक्षेपसकृन्मतिनिर्वेधगुरुद्रोहराजगामिपैशून्यवेदनिन्दावेदविस्मरणकुशास्त्राभ्यासवितण्डावादवेदनाशप्रभृतीनि ।

सुरापानसमानि लशुनविड्वराहच्छत्राकग्रामकुक्कुटपलाण्डुगृञ्जनादिमतिभक्षणात्मवादित्वपरकर्तृत्वजैह्मयकौटिल्यात्मोत्कर्षार्थराजकुलानृतभाषणोदकीवक्त्रास्वादमित्रवधकूटसाक्षिवेदनिन्दावेदविस्मरणतदन्नभोजनादीनि ।

सुवर्णस्तेयसमानि ब्राह्मणसम्बन्ध्यश्वमनुष्यस्त्रीधेनुहरणनिक्षेपहरणप्रभृतीनि ।

गुरुतल्पसमानि स्नुषाभगिनीसगोत्राचाण्डालीसखिभार्योत्तमजातिकन्यारेतःसेकपितृष्वसृमातृष्वसृमातुलानीमातृसपत्न्याचार्यापत्न्याचार्यतनयास्वतनयास्वसृपितृव्यमातामहमातुलश्रोत्रियर्त्विगुपाध्यायशिष्यस्त्रीप्रव्राजितव्रतस्थोत्तमब्राह्मणीसगोत्रशरणागतमातृसखीराजपत्नीमातुलानीसखीगमनप्रभृतीनि पितृमातृयोनिसम्बन्धस्तेननास्तिकनिन्दितकर्मकारणनिन्दितकर्मप्रभृतीन्यनुपातकानि ।

गोवधव्रात्यतास्तेयऋणानपाकरणानाहिताग्नित्वापण्यविक्रयपरिवेदनभृतकाध्यापनभृतकाध्ययनपारदार्यपारिवित्त्यवार्द्धुष्यलवणक्रिया-



स्त्रीशूद्रविट्क्षत्रियवधनिन्दितार्थोपजीवननास्तिक्यव्रतलोपस्वसुतविक्रयपशुपुष्पधान्यस्तेयायाज्ययाजनपितृमातृसुतत्यागतडागारामविक्रयकन्यादूषणपरिवेदकयाजनपरिवेदककन्याप्रदानकौटिल्यव्रतलोपात्मार्थक्रियारम्भमद्यपस्त्रीनिषेवणस्वाध्यायाग्निसुबान्धवत्यागेन्धनप्रयोजनद्रुमच्छेदस्त्रीहिंसनौषधसेवनहिंस्रयन्त्रविधानव्यवसानात्मविक्रयशूद्रप्रेक्षहीनसख्यहीनयोनिनिषेवणानाश्रमवासपरान्नपरिपुष्टत्वासच्छास्त्राभिगमनाकराधिकारित्वभार्याविक्रयकालानुपनीतत्वागृहीतसुवर्णप्रदानर्णानापाकरणदेवर्षिपितृऋणानापाकरणानाहिताग्नित्वगर्भस्त्रीवधप्रभृतीन्युपपातकानि ।

ब्राह्मणरुजःकरणाघ्रेयमद्यघ्राणपशुपुरुषमैथुनप्रभृतीनि जातिभ्रंशकराणि । खराश्वोष्ट्रमृगहयजातिमीनाहिमहिषान्यग्राम्यपशुवधाभिचारलशुनादिमतिभक्षणप्रभृतीनि मलिनीकरणानि । निन्दितधनादानवाणिज्यशूद्रसेवनकुसीदजीवनान्त्यभाषणप्रभृतीन्यपात्रीकरणानि । बहुकृमिकीटजलस्थलजवयोहत्यानुगतभोजनबहुफलधनपुष्पस्तेयप्रभृतीनि सङ्करीकरणानि । अन्यानि पापानि प्रकीर्णकसंज्ञानि विहितानुष्ठितानि च सन्ध्योपासनादीनि । तन्निमित्तं प्रायश्चित्तान्यनुष्ठेयानि ।

## अथ महापातकानि ।

तत्र महापातकान्याह मनुः—

"ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
महान्ति पातकान्याहुः संयोगं चैव तैः सह" ॥ इति ।

पातयतीति पातकमिति पातकशब्दः सर्वव्यक्त्यनुवर्त्ती, महच्छब्दो गुरुत्वख्यापनार्थः। तत्संयोगो वत्सरमात्रम्। ब्रह्महननगुर्वङ्गनागमनस्तेयपतितसंयोगः सर्ववर्णानाम्। "ब्राह्मणसुवर्णहरणं महापातकम्" इत्यापस्तम्बस्मरणात्॥

"ब्रह्महा मद्यपः स्तेयी तथैव गुरुतल्पगः।
एते महापातकिनो यश्चैतैः सह संविशेत्"॥

इति योगीश्वरोऽप्याह। ब्राह्मणं हतवान् ब्रह्महा हननं हिंसा। सा हि प्राणवियोगकरो व्यापारः। धातूनां क्रियावाचित्वनियमात्। ततश्च तद्व्यापारोऽनुष्ठानकाले कालान्तरे च कालान्तरनिरपेक्षः प्राणवियोगजनकः स ब्रह्महेत्युच्यते।

मद्यपो निषिद्धसुरायाः पाता। स्तेनो ब्राह्मणसुवर्णहर्त्ता। गुरुतल्पगो गुरुभार्यागामी। शयनवाचिना तल्पशब्देन साहचर्येण भार्याया उपलक्षणात्। "तल्पं शय्याट्टदारेषु" इत्यभिधानात्। यश्चैतैर्ब्रह्महादिभिः प्रत्येकं संवत्सरं सह संवसति सोऽपि तत्समः। तदुक्तम्—

"एभिस्तु संवसेद्यो वै वत्सरं सोऽपि तत्समः"। इति।

प्रकारवाची तथाशब्दोऽनुग्राहकमाज्ञापयितारमभ्यर्थयितारमुपदेष्टारं स्वार्थं परार्थं चानुमन्तारं निमित्तभर्त्सनताडनार्थहरणादिना कोपजनकं संगृह्णाति। तत्र पलायमानममित्रमुपरुन्धन् परेभ्यश्च हन्तारं परिरक्षन् हन्तुः पटिमानमुपजनयन्नुपाकारकर्त्तानुग्राहकः।

अप्रवृत्तप्रवर्तकः प्रयोजकः। स त्रिविधः। आज्ञापयिता, अभ्यर्थयिता, उपदेष्टा च। तत्र यः स्वयमुच्चः सन् नीचं भृत्यादिकं



"मदीयममित्रं जहि" इति यः प्रेषयति स चाज्ञापयिता भवति। यः स्वयमसमर्थः प्रार्थनादिना "मच्छत्रुं व्यापादय" इत्युच्चं प्रेरयति स चाभ्यर्थयिता। अनयोः स्वार्थसिध्यर्थमेव प्रयोक्तृत्वम्। यश्च मर्मोद्घाटनादिना प्रयोज्यगतं फलमभिसन्धाय "मच्छत्रुं व्यापादय" इत्युपदेशपुरस्सरं प्रेरयति स चोपदेष्टेत्युच्यते।

अनुमन्ता तु प्रवृत्तप्रत्युपोद्बलकः। स द्विविधः। यः स्वपरार्थमनुजानाति। एतेषां चानुग्राहकफलप्रयोजकादीनां प्रत्यासत्तिव्यवधानापेक्षया व्यापारगुरुलाघवापेक्षायाः फलगौरवलाघवात् प्रायश्चित्तेऽपि गौरवं लाघवं च बोद्धव्यम्। तत्रानुग्राहकस्य तावदल्पं फलम्। प्रायश्चित्तं च तस्य स्वयमेव हिंसायां प्रवृत्तत्वेन स्वतन्त्रकर्तृत्वे सत्यपि साक्षात् प्राणवियोगफलकखड्गप्रहारादिव्यापारयोगित्वाभावेन साक्षात् कर्तृत्ववद्भूयो हिंसारम्भकत्वाभावात्। प्रयोजकस्य ततोऽप्यल्पं फलम्। स्वतन्त्रकर्तृप्रवृत्तिजनकत्वेन व्यवहितत्वात्। प्रयोजकेषूपदेष्टुरल्पं फलम्। परार्थं प्रवृत्तत्वात्।

तदुक्तं मनुना—

"बहूनामेककार्याणां सर्वेषां शस्त्रधारिणाम्।
यद्येको घातयेत्तत्र सर्वे ते घातकाः स्मृताः"॥ इति।

तथा विष्णुना—

"आक्रुष्टस्ताडितो वापि धनैरेव प्रयोजितः।
यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम्॥
ज्ञातिमित्रकलत्रार्थं सुहृत्क्षेत्रार्थमेव च।
यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्"॥ इति।

पातयतीति पातकमिति पातकशब्दः सर्वव्यक्त्यनुवर्त्ती, महच्छब्दो गुरुत्वख्यापनार्थः। तत्संयोगो वत्सरमात्रम्। ब्रह्महननगुर्वङ्गनागमनस्तेयपतितसंयोगः सर्ववर्णानाम्। "ब्राह्मणसुवर्णहरणं महापातकम्" इत्यापस्तम्बस्मरणात्॥

"ब्रह्महा मद्यपः स्तेयी तथैव गुरुतल्पगः।
एते महापातकिनो यश्चैतैः सह संविशेत्"॥

इति योगीश्वरोऽप्याह। ब्राह्मणं हतवान् ब्रह्महा हननं हिंसा। सा हि प्राणवियोगकरो व्यापारः। धातूनां क्रियावाचित्वनियमात्। ततश्च तद्व्यापारोऽनुष्ठानकाले कालान्तरे च कालान्तरनिरपेक्षः प्राणवियोगजनकः स ब्रह्महेत्युच्यते।

मद्यपो निषिद्धसुरायाः पाता। स्तेनो ब्राह्मणसुवर्णहर्त्ता। गुरुतल्पगो गुरुभार्यागामी। शयनवाचिना तल्पशब्देन साहचर्येण भार्याया उपलक्षणात्। "तल्पं शय्याट्टदारेषु" इत्यभिधानात्। यश्चैतैर्ब्रह्महादिभिः प्रत्येकं संवत्सरं सह संवसति सोऽपि तत्समः। तदुक्तम्—

"एभिस्तु संवसेद्यो वै वत्सरं सोऽपि तत्समः"। इति।

प्रकारवाची तथाशब्दोऽनुग्राहकमाज्ञापयितारमभ्यर्थयितारमुपदेष्टारं स्वार्थं परार्थं चानुमन्तारं निमित्तभर्त्सनताडनार्थहरणादिना कोपजनकं संगृह्णाति। तत्र पलायमानममित्रमुपरुन्धन् परेभ्यश्च हन्तारं परिरक्षन् हन्तुः पटिमानमुपजनयन्नुपाकारकर्त्तानुग्राहकः।

अप्रवृत्तप्रवर्तकः प्रयोजकः। स त्रिविधः। आज्ञापयिता, अभ्यर्थयिता, उपदेष्टा च। तत्र यः स्वयमुच्चः सन् नीचं भृत्यादिकं



"मदीयममित्रं जहि" इति यः प्रेषयति स चाज्ञापयिता भवति। यः स्वयमसमर्थः प्रार्थनादिना "मच्छत्रुं व्यापादय" इत्युच्चं प्रेरयति स चाभ्यर्थयिता। अनयोः स्वार्थसिध्यर्थमेव प्रयोक्तृत्वम्। यश्च मर्मोद्घाटनादिना प्रयोज्यगतं फलमभिसन्धाय "मच्छत्रुं व्यापादय" इत्युपदेशपुरस्सरं प्रेरयति स चोपदेष्टेत्युच्यते।

अनुमन्ता तु प्रवृत्तप्रत्युपोद्वलकः। स द्विविधः। यः स्वपरार्थमनुजानाति। एतेषां चानुग्राहकफलप्रयोजकादीनां प्रत्यासत्तिव्यवधानापेक्षया व्यापारगुरुलाघवापेक्षायाः फलगौरवलाघवात् प्रायश्चित्तेऽपि गौरवं लाघवं च बोद्धव्यम्। तत्रानुग्राहकस्य तावदल्पं फलम्। प्रायश्चित्तं च तस्य स्वयमेव हिंसायां प्रवृत्तत्वेन स्वतन्त्रकर्तृत्वे सत्यपि साक्षात् प्राणवियोगफलकखड्गप्रहारादिव्यापारयोगित्वाभावेन साक्षात् कर्तृत्ववद्भूयो हिंसारम्भकत्वाभावात्। प्रयोजकस्य ततोऽप्यल्पं फलम्। स्वतन्त्रकर्तृप्रवृत्तिजनकत्वेन व्यवहितत्वात्। प्रयोजकेषूपदेष्टुरल्पं फलम्। परार्थं प्रवृत्तत्वात्।

तदुक्तं मनुना—

"बहूनामेककार्याणां सर्वेषां शस्त्रधारिणाम्।
यद्येको घातयेत्तत्र सर्वे ते घातकाः स्मृताः"॥ इति।

तथा विष्णुना—

"आक्रुष्टस्ताडितो वापि धनैरेव प्रयोजितः।
यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम्॥
ज्ञातिमित्रकलत्रार्थं सुहृत्क्षेत्रार्थमेव च।
यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्"॥ इति।

ततो व्यवहितानामल्पफलभागित्वमितरेषामन्यथेति सूक्तम् ।

ननु व्यवहितस्यापि कारणत्वे हिंस्रमातापित्रोरपि कारणतेति मन्तव्यम् । पूर्वभावित्वमात्रेण कारणत्वात् । तस्य च कारणकारणतयाऽप्युपपत्तेरिति चेन्न । स्वरूपातिरिक्तकार्योत्पत्त्यनुगुणव्यापारयोगिन एव कारणत्वात् । अत एव धर्माभिसन्धिनिमित्तकूपवाप्यादौ प्रमादात् ब्राह्मणादिमरणे खानयितुर्दोषाभावः ।

संवर्तः—

"बन्धने गोचिकित्सार्थे गूढगर्भविमोचने ।
तन्त्रे कृते विपत्तिश्चेत् प्रायश्चित्तं विपश्चिते" ॥

एतदभिज्ञविषयम् । यत्र मन्युनिमित्तक्रोशनादिकं नास्ति तत्र तन्नाम गृहीत्वा मरणेऽपि न दोषः । तदुक्तं मनुना—

"अकारणं तु यः कश्चिद् द्विजः प्राणान् परित्यजेत् ।
तस्यैव तत्र दोषः स्यान्न तु यं परिकीर्त्तयेत्" ॥ इति ।

## महापातकादिपरिणामः ।

महापातकानामुक्तं फलम्—

"महापातकजान् घोराम् नरकान् प्राप्य दारुणान् ।
कर्मक्षयात् प्रजायन्ते महापातकिनस्त्विह" ॥ इति ।

अयमर्थः—एवंविधान् नरकान् कर्मजन्यनरकान् प्राप्य कर्मक्षयाद् दुःखोपभोगक्षयानन्तरं कर्मविशेषादिह संसारे दुःखबहुलासु योनिषु जायत इति । कस्य कस्य योनिं प्राप्नोतीत्यपेक्षायामुक्तम् ।



"श्वशूकरखरोष्ट्राणां गोजाविमृगपक्षिणाम् ।
चण्डालपुल्कसानां च ब्रह्महा योनिमृच्छति ॥
परपुल्कसवेनानां सुरापो नात्र संशयः" ।

कामकारकृते त्वन्यास्वपि दुःखबहुलासु मनूक्तासु संसरन्तीति द्रष्टव्यम् । एवं रौरवादिषु नरकेषु दुःखपरम्परामनुभूय सूकरादिषु क्रमेणानुभूय पश्चात् दुरितशेषेणोत्पत्तिसमय एव क्षयरोगादिलक्षणयुक्ता दुःखप्रचुरेषु मानुषशरीरेषु संसरन्ति ।

तदुक्तम्—

"ब्रह्महा क्षयरोगी स्यात् सुरापः श्यावदन्तकः ।
हेमचोरी तु कुनखी दुश्चर्मा गुरुतल्पगः ॥
यो येन संविशत्येषां स तल्लिङ्गोऽभिजायते" ।

श्यावदन्तकः स्वभावतः कृष्णदन्तकः । दुश्चर्मा कुष्ठी । एषां ब्रह्महादीनां मध्ये येन पतितेन सह यः संविशति स तल्लिङ्ग इत्युपलक्षणम् । ततश्च तत्तन्नरकादिकमपि प्राप्नोति । एवंविधनरकादिप्राप्तिनिवृत्त्यर्थं प्रायश्चित्तमनुष्ठेयम् । अन्यथा नरकादिप्राप्तेरावश्यकत्वात् । तदाह योगी—

"तामिस्रं लोहशङ्कुं च महानिरयशाल्मली ।
रौरवं कुड्मलं पूतिं स्वन्तिकं कालसूत्रकम् ॥
संघातं लोहितोदं च सविषं संप्रतापनम् ।
महानरककाकोलं संजीवनमहापथम् ॥
अवीचीमन्धतामिस्रं कुम्भीपाकं तथैव च ।
असिपत्रवनं चैव तपनं चैव विंशकम् ॥

महापातकजैर्घोरैरुपपातकजैस्तथा ।
अन्विता यान्त्यचरितप्रायश्चित्ता नराधमाः" ॥ इति ।

पापकरणानन्तरं तेनैव प्रायश्चित्तं कर्तव्यम् । तथा च हारीतः— "विस्रम्भात् स्नेहलोभाच्च प्रमादाद्वाऽशुभं कृत्वा सद्यः शौचं समाचरेत्" इति । शौचं प्रायश्चित्तम् । पापकारणानन्तरं पापप्रकटनैः पापक्षयमाहाङ्गिराः—

"वाङ्मनः कर्मसंभूतमेन आविष्करोति यः ।
विकर्मणा तथा प्राणी पापाद्धि परिमुच्यते ॥
उदयं यन् यदादित्यस्तमः सर्वं व्यपोहति ।
तद्वत्कल्याणमातिष्ठन् सर्वं पापं व्यपोहति" ॥ इति ।

कल्याणं प्रायश्चित्तम् । तथा—अभक्ष्यभक्षणमभोज्यभोजनमपेयपानमयाज्ययाजनमसत्प्रतिग्रहः परदाराभिगमनं परद्रव्यापहरणं प्राणिहिंसा चेति शारीराणि । पारुष्यमनृतं विवादः श्रुतिविक्रयश्चेति वाचिकानि । परोपतापनं पराभिद्रोहः क्रोधो लोभो मोहोऽहङ्कारश्चेति मानसानि । तान्येतान्यष्टादश नैरेयानि कर्माणि ।

तत्र चोक्तो विशेषः—

"यस्यां यस्यामवस्थायां यत्करोति शुभाशुभम् ।
तस्यां तस्यामवस्थायां तत्फलं समवाप्नुयात् ॥
शारीरेण तु शारीरं वाङ्मयं वचसा तथा ।
मानसं मनसा चैव स्वकर्मफलमश्नुते" ॥ इति ।



# अथ परिषदि प्रायश्चित्तयाचनम् ।

एवं प्रायश्चित्तस्यावश्यकतामवगम्य तत्कामेन पर्षदुपस्थानं कर्तव्यम् । तल्लक्षणं च—

"चत्वारो वेदधर्मज्ञाः पर्षत् त्रैविद्यमेव वा ।
सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मचिन्तकः" ॥ इति ।

ऋग्यजुःसामात्मिकास्तिस्रो विद्यास्तत्समूहस्त्रैविद्यम् । तेन तदध्येतारस्त्रयो ब्राह्मणा लभ्यन्ते । तत्त्रयः पर्षत् । अथवा—आत्मानमधिकृत्य प्रवृत्तं शास्त्रमध्यात्मम् । तद्वित्त्रय एको वा पर्षत् । पर्षदुपस्थानं तु कृत्वा पापं निवेदयेत् ।

"अनिवेदयतस्तस्य कृतं पापं हि वर्द्धते ।
बहु वा स्वल्पकं वाऽपि कर्म सभ्यो निवेदयेत् ॥
प्रायश्चित्ते समुत्पन्ने ह्रीमान् सत्यपरायणः ।
मृदुरार्जवसम्पन्नः शुद्धिं याचेत मानवः ॥
सचैलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः ।
क्षत्रियो वापि वैश्यो वा पर्षदं ह्युपतिष्ठते" ॥ इति ।

अयमत्र प्रायश्चित्तोपक्रमप्रकारः । वेदशास्त्राभिज्ञान् ब्राह्मणान् गत्वा सचैलं स्नानं विधाय क्लिन्नवासाः समाहित आर्जवादिगुणयुक्त आत्मनः शुद्धिं प्रार्थयमानः शीघ्रमार्तियुक्तः साष्टाङ्गं प्रणम्य किञ्चिदुदाहरेत् । ततस्ते वृद्धपुरस्सराः "तव किं कार्यं का च ते पीडेति किमस्मत्तोऽपेक्षसे, इति सर्वं यथार्थः सत्यमेव वद" इति वदेयुः ।

तैरेवमनुज्ञातः सत्यं निवेदयेत् । अत्र विशेषमाह देवलः—

"कृच्छ्राणां दापको राजा निर्देष्टा धर्मपाठकः ।
अपराधी प्रयोक्ता च रक्षिता कृच्छ्रपालकः" ॥ इति ।

राजा हि कृच्छ्राणां दापकः । धर्मपाठकः प्रायश्चित्तनिर्देष्टा । अपराधी पापकारी कृच्छ्रप्रयोक्ता । रक्षिता राजभृत्यः कृताकृतावेक्षणेन प्रायश्चित्तपरिपालकः ।

## अथ सभ्यकर्तव्यनिरूपणम् ।

सभ्यैस्तु किं कर्तव्यमित्यपेक्षायामुक्तम्—

"विचारस्तादृशः कार्यो यथा सर्वे सभासदः ।
एकवाक्यतया ब्रूयुस्तथा श्रेयोऽधिगच्छति" ॥ इति ।

धर्मपाठकलक्षणमङ्गिरसोक्तम्—

"शब्दे छन्दसि कल्पे च शिक्षायां च सुनिश्चितः ।
ज्योतिषामयने चैव स निरुक्ताङ्गविद्भवेत् ॥
वेदविद्याव्रतस्नातः सत्यसन्धो जितेन्द्रियः ।
अनेकधर्मशास्त्रज्ञः प्रोच्यते धर्मपाठकः" ॥ इति ।

शातातपः—

"यद्विना धर्मशास्त्रेण प्रायश्चित्तं विधीयते ।
न तेन शुद्धिमाप्नोति प्रायश्चित्ते कृतेऽपि सः ॥
यद्वदन्ति तमोमूढा मूर्खा धर्ममतन्द्रिताः ।
तत्पापं शतधा भूत्वा तद्वक्तॄनधिगच्छति ॥
अज्ञात्वा धर्मशास्त्राणि प्रायश्चित्तं ददाति यः ।



प्रायश्चित्ती भवेत् पूतः किल्बिषं परिषद्व्रजेत्" ॥ इति ।

अयं भावः । द्विविधमज्ञानम् । एकं तु धर्मशास्त्रपाठे सत्यपि न्यायनिर्णये कौशलाभावेन प्रकृतस्य सूक्ष्मस्य प्रायश्चित्तविशेषस्यापरिज्ञानम् । द्वितीयं तु वृद्धव्यवहारादिना सत्यपरिज्ञाने धर्मशास्त्रापरिशीलनम् । ततश्च तमोमूढैः प्रज्ञान्माद्येन तमसा सूक्ष्मन्यायेषु भ्रान्तैः पण्डितंमन्यैर्मूर्खैः प्रायश्चित्तविशेषमजानद्भिः प्रायश्चित्तं नोपदेष्टव्यम् । अथापि पण्डितेर्ष्ययोपदिष्टमपि चेत्तर्हि तत्पापं मूर्खान् पण्डितानसूयकान् वक्तॄन् शतधा भूत्वा प्राप्नोति । अनेनैवाभिप्रायेणाङ्गिरसाप्युक्तम्—

"प्रायश्चित्तं प्रयच्छन्ति ये द्विजा नामधारकाः ।
ते द्विजाः पापकर्माणः समेता नरकं ययुः" ॥

चतुर्विंशतिमते—

"प्रायश्चित्तं प्रयच्छन्ति ब्राह्मणा नामधारकाः ।
ते सर्वे पापकर्माणः समेता नरकं ययुः" ॥

पराशरः [ अङ्गिराः ]—

"यत्तु दत्तमजानद्भिः प्रायश्चित्तं सभागतैः ।
जानते न प्रयच्छन्ति तेषां ते समभागिनः ॥
तस्मादार्त्तं समासाद्य ब्राह्मणं च विशेषतः ।
जानद्भिर्धर्मपन्थानं न भाव्यं तु पराङ्मुखैः ॥
अनर्चितैरनाहूतैरपृष्टैश्चैव संसदि ।
प्रायश्चित्तं न दातव्यं जानद्भिरविकल्पतः ॥
सर्वेषां निश्चितं यच्च यश्च प्राणान्न पातयेत् ।

आहूय श्रावयेदेकः पर्षदा यो नियोजितः ॥
शृणु भोस्त्वमिदं विप्रैर्यत्तु वादिश्यते व्रतम् ।
तत्ते यत्नेन कर्तव्यमन्यथा तद्वृथा भवेत् ॥
यदा त्वया भवेच्चीर्णं व्रतं शुद्धिकरं महत् ।
तदा कुर्यात् प्रयत्नेन शक्त्या विप्राभिपूजनम् ॥
ब्राह्मणो ब्राह्मणानां तु क्षत्रियाणां पुरोहितः ।
वैश्यानां याजकश्चैव प्रायश्चित्तं समादिशेत् ॥
अगुरुः क्षत्रियाणां तु वैश्यानां चाप्ययाजकः ।
प्रायश्चित्तं समादिश्य तप्तकृच्छ्रं समादिशे[चरे]त्" ॥ इति ।

प्रायश्चित्तं प्रायश्चित्तदानम् ।

## अथ प्रायश्चित्ततारतम्यनिरूपणम् ।

यथा क्षत्रियवैश्ययोः पर्षद्वृद्धिस्तथा व्रतमपि वर्द्धते । इयं च व्रतवृद्धिरुत्तमजातिहनने ज्ञातव्या । इतरत्र व्रतस्य ह्रास एव दृश्यते ।

तथा चतुर्विंशतिमते दर्शितः—

"प्रायश्चित्तं यदाम्नातं ब्राह्मणस्य महर्षिभिः ।
पादोनं क्षत्रियः कुर्यादर्द्धं वैश्यः समाचरेत्" ॥ इति ।

तत्र विशेषः—

"न्यायतो मार्गमाणस्य क्षत्रियादेः प्रणामिनः ।
अन्तरा ब्राह्मणं कृत्वा व्रतमेषां समादिशेत् ॥



तथा शूद्रं समासाद्य तदा धर्मपुरस्सरम् ।
प्रायश्चित्तं प्रदातव्यं वेदमन्त्रविवर्जितम्" ॥

## अथ व्रतादेशे राजानुमतिः ।

सर्वैरपि व्रातादेशनं राजानुमत्या कर्तव्यम् । तदाह पराशरः—

"राज्ञश्चानुमते स्थित्वा प्रायश्चित्तं विनिर्दिशेत् ।
स्वयमेव न कर्तव्या नरैः स्वल्पापि निष्कृतिः" ॥ इति ।

तदाह देवलः—

"याचितास्तेन ते चापि ब्राह्मणाः पापभीरुणा ।
निष्कृतिं व्यवहारार्थं कुर्युस्तस्मै नृपाज्ञया" ॥

न तु राजानं वञ्चयित्वा स्वयं कार्यम् ।

## अथ व्रतग्रहणप्रकारः ।

तत्र विष्णुना व्रतग्रहणप्रकारो दर्शितः—

"सर्वपापेषु सर्वेषां द्विजानां विधिपूर्वकम् ।
ग्रहणं सम्प्रवक्ष्यामि प्रायश्चित्ते प्रकीर्तिते ॥
दिनान्ते नखरोमादीन् प्रवाप्य स्नानमाचरेत् ।
भस्मगोमयमृद्वारिपञ्चगव्यादिकल्पितैः ॥
मलापकर्षणं कार्यं ब्रह्मणैवोपसिद्धये ।
दन्तधावनपूर्वेण पञ्चगव्येन संयुतम् ।
व्रतं निशामुखे ग्राह्यं बहिस्तारकदर्शने" ॥

बहिर्ग्रामाद्बहिः ।

"आचम्यातः परं मौर्ञ्जीं ध्यायन् दुष्कृतमात्मनः ।
मनःसन्तापनं तीव्रमुद्वहेल्लोकसम्मतः" ।। इति ।

## अथ स्त्रीवपनविचारः ।

बौधायन आह—

"केशश्मश्रुनखरोमवापनम्" ।

चन्द्रायणादिषु स्त्रीविषये निषेध उक्तः ।

स्त्रियाः केशवपनवर्जमिति ।

तदुक्तम्—

"केशानां नास्ति नारीणां वपनं व्रतयज्ञयोः ।
गोवधादिषु सर्वेषु छेदयेदङ्गुलित्रयम्" ।। इति ।

"सधवानां तु नारीणामलङ्काराय सर्वदा ।
केशसन्धारणं प्रोक्तं प्रायश्चित्तं द्विजोत्तमैः" ।। इति ।

अत्र सधवाग्रहणं विधवानुज्ञां प्रयच्छति ।

वपनं विधवाभिः कार्यमेवेति ।

हारीतेन विशेषोऽभिहितः—

"राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः ।
केशानां वपनं कृत्वा प्रायश्चित्तं समाचरेत् ।।
केशानां रक्षणार्थं तु द्विगुणं व्रतमाचरेत् ।
द्विगुणे व्रत आचीर्णे दक्षिणा द्विगुणा भवेत्" ।। इति ।

इदं महापातकव्यतिरिक्तविषयम् । तदुक्तं महर्षिणा—

"विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनम् ।



ऋते महापातकिनो गोहन्तुश्चावकीर्णिनः" ।। इति ।

गोवधमहापातकावकीर्णिप्रायश्चित्तेषु वपनमेव । अतिरिक्तप्रायश्चित्तेषु वपनानिच्छुर्द्विगुणं व्रतं कुर्यात् ।

अत्रोक्तो विशेषः पैठीनसिना । "द्वादशाहे सम्पूर्णे वपनम्" इति नियमात् द्वादशाहन्यूने वपनाभावो गम्यते । तद्द्विरात्रादिसाध्यकृच्छ्राणामावृत्त्या द्वादशरात्रसाम्यम् । तथापि वपनं कर्तव्यमेव । वपनं चाक्षिरोमशिखावर्जं कर्तव्यम् । "अक्षिरोमशिखावर्जनम्" इति वसिष्ठस्मरणात् ।

उपक्रान्तव्रतानाचरणे दोषोऽपि छागलेयेनाभिहितः—

"पूर्वं व्रतं गृहीत्वा तु नाचरेत्काममोहितः ।
जीवन् भवति चण्डालो मृतः श्वा चैव जायते" ।।इति ।

## अथ ब्रह्महननप्रायश्चित्तम् ।

अथ प्रायश्चित्तम् । ब्रह्मघातकाय समुद्रसेतुयात्रा वेदोपपन्नब्राह्मणेनोपदेष्टव्या । तदुक्तम्—

"चातुर्विद्योपपन्नस्तु विधिवद्ब्रह्मघातके ।
समुद्रसेतुगमनं प्रायश्चित्तं विनिर्दिशेत्" ।। इति ।

ऋगादयश्चतस्रो विद्याश्चतुर्विद्यास्ताभिरुपपन्नस्तदध्ययनतत्परः । अर्थानुष्ठानयुक्तश्च । समुद्रे श्रीरामबद्धः सेतुः समुद्रसेतुः । तद्यात्रा ब्रह्मघातके पुरुषे यथाविध्यनुष्ठेयत्वेन निर्दिशेत् ।

तत्र चायमेव विधिः । छत्रोपानद्विवर्जितः सन् सेतुमार्गे विकर्मस्थान् परित्यज्य चतुर्वर्णेभ्यो भिक्षासमाहरणं कर्तव्यम् । तत्रैव सोऽभि-

लापः कर्तव्यः। "दुष्कृतकर्मासौ भवद्द्वारि भिक्षार्थी तिष्ठति" इति स्वपातकाख्यां प्रतिभिक्षागृहं प्रख्यापयेत्। यतो हि पापप्रज्ञापनं प्रायश्चित्ताङ्गम्। गोकुले वसतिर्देवतायतनादौ वा पुण्यप्रदेशान्तरे वा। तत्प्रत्यवायप्रख्यापनं भिक्षागृह इव तीर्थादिषु नदीप्रस्रवणेषु पुण्यप्रदेशस्थिततापससमीपे विद्वत्सु च। अन्येष्वपि ब्राह्मणसमुदायेषु कर्तव्यम्। ततश्च यथावदुक्तप्रकारेण प्रत्यवायक्षयावश्यकता। ततस्सेतुदर्शनोत्तरकालं समुद्रे स्नात्वोपवासवपनपूर्वं सर्वं तीर्थकृत्यं समाप्य सपरिकरं श्रीरामेश्वरं श्रीहनुमदानीतविश्वेश्वरदर्शनपूर्वं दृष्ट्वा प्रणम्य "पापरूपिणं मां त्राहि" इति प्रार्थयित्वा परावृत्तिं कुर्वन् पूर्ववदेव पापप्रख्यापनपूर्वं भिक्षाटनं विधाय स्वग्राममागत्य चतुर्वेदविदो ब्राह्मणान् गत्वैकैकस्मिन्नेकैकशतं गां दद्यात्। इति द्वादशशतं सप्तषट्पञ्चचतुस्त्रिंशतं वा दद्यात्। सर्वथा मुच्यते।

तदुक्तम्—

"समुद्रसेतुगमनं चातुर्विद्यः समादिशेत्।
शरणागतमार्तं तु मुमूर्षुमनुतापिनम्"॥ इति।

कर्तव्यताप्रकारोऽपि तेनैवाभिहितः—

"सेतुबन्धपथे भिक्षां चातुर्वर्ण्यात् समाचरेत्।
वर्जयित्वा विकर्मस्थान् छत्रोपानद्विवर्जितः"॥ इति।

विकर्मस्थाः—चत्वारो वर्णा यानि कर्माणि शास्त्रविहितानि कुर्वते, तद्विरुद्धकर्मकर्तारो विकर्मस्थाः। शास्त्रविहितविरुद्धानि च कर्माणि विकर्माणि। तेषु तात्पर्येण तिष्ठन्तीति विकर्मस्थाः। तान् वर्जयित्वा यथाशास्त्रं वर्त्तमानाच्चातुर्वर्ण्याद्भिक्षां चरेत्। चत्वारो



वर्णाश्चातुर्वर्ण्यम्। स्वार्थे ष्यञ्। 'वर्त्तमानसामीप्ये वर्त्तमानवद्वा' इत्यनेन ज्ञाप्यते। भिक्षमाणवक्तव्यप्रकारः—

"अहं दुष्कृतकर्मा वै महापातककारकः।
गृहद्वारेषु तिष्ठामि भिक्षार्थी ब्रह्मघातकः॥
गोकुलेषु वसेच्चैव ग्रामेषु नगरेषु च।
तपोवनेषु तीर्थेषु नदीप्रस्रवणेषु च॥
एतेषु ख्यापयन्नेनः पुण्यं गत्वा तु सागरम्।
दशयोजनविस्तीर्णं शतयोजनमायतम्॥
रामचन्द्रसमादिष्टनलसञ्चयसञ्चितम्।
सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति॥
सेतुं दृष्ट्वा विशुद्धात्मा त्ववगाहेत सागरम्।
पुनः प्रत्यागतो वेश्म वासार्थमुपसर्पति॥
सपुत्रः सह भृत्यैश्च कुर्याद् ब्राह्मणभोजनम्।
गाश्चैकैकं शतं दद्याच्चातुर्विद्येषु दक्षिणाम्॥
ब्राह्मणानां प्रसादेन ब्रह्महा तु विमुच्यते"। इति।

ब्राह्मणप्रसादस्तु विपापः शुद्धस्त्वमसीत्याद्युक्तिः। इदं व्रतं गुणहीनब्राह्मणवधे द्रष्टव्यम्।

अस्मिन्नेव विषये पक्षान्तरमाह योगी—"पात्रे धनं वा पर्याप्तं दत्त्वा शुद्धिं समाप्नुयात्"।

तथा मनुः—

"सर्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत्।
धनं वा जीवनोपायं गृहं वा सपरिच्छदम्"॥ इति।

अपुत्रकर्तृकं सर्वस्वदानं स्वपुत्रेण गृहदानमिति ।

अथवा राज्ञाऽश्वमेधोऽनुष्ठेयः । तथा च श्रूयते तैत्तिरीयब्राह्मणे—"सर्वं वा एतेन पाप्मानमतरत् । सर्वं पाप्मानं तरति, तरति ब्रह्महत्यां योऽश्वमेधेन यजते । य उ चैनमेवं वेद" इति । ततः कूश्माण्डगणहोमावपि कर्तव्यौ ।

नानामुनिप्रणीताः प्रायश्चित्तप्रकाराः । "स्वव्यापादितब्राह्मणशिरस एकदेशभूतं कपालं तस्यैव कपालान्तरं दण्डाग्रे आरोप्य तां ध्वजां च हस्ते गृहीत्वा पर्षदाऽभिमतो गर्दभाजिनं परिधाय भिक्षाप्रयोजनकलोहितमृण्मयकपालखण्डपाणिः शिष्टान्नमात्रापेक्षी वन्यफलाशी एककालाहारः स्वकर्मख्यापकः भिक्षानिमित्तमेव ग्रामप्रवेशी शिष्टाभावे चातुर्वर्ण्यभिक्षाशनः सर्वभूतहितनिरतः शून्यागारो नदीपर्वतगुहावृक्षमूलनिकेतनः कृतवपनो जटाधारी वा दिवोत्थितो रात्रौ तिष्ठन् ब्रह्मचारी सन्ध्योपासनतत्परो द्वादशवर्षमरण्ये वसेत् ।

तथा च मनुः—

"ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत् ।
कृतवापनो निवसेद् ग्रामान्ते गोव्रजेऽपि वा" ॥ इति ।

वाशब्दो जटाधारणेन सह विकल्पार्थः । "ब्रह्महा द्वादशाब्दानि वासा जटी ध्वजी" इति स्मरणात् ।

तथा च यमः—

'अथ वै ब्रह्महत्यायां खट्वाङ्गी मितभोजनी ।
मृण्मयेन कपालेन स्वकर्म श्रावयंस्तथा ॥
ब्राह्मणावसथान् सर्वान् देवागाराणि वर्जयेत् ।



शोचन्निन्दन्नात्मानं संस्मरन् ब्राह्मणं चरेत् ॥
व्रतं चरेद्यथोद्दिष्टं देवब्राह्मणपूजकः ।
सप्तागाराण्यपूर्वाणि यान्यसंकल्पितानि च ॥
सञ्चरेत्तानि शनकैर्विधूमे भुक्तवर्जिते ।
एकाहारं चरेत् भैक्षमलब्ध्वोपवसेदिनम् ॥
एवं समाचरेद्यस्तु ब्रह्महत्यां व्यपोहति" ।

खट्वाङ्गशब्देन दण्डारोपितशिरःकपालात्मको ध्वजो गृह्यते । "खट्वाङ्गपाणिः" इति गौतमस्मरणात् ।

तथा शङ्खः—"ब्रह्महा पर्षदाऽनुमतः खट्वाङ्गी गर्दभाजिनी मृण्मयपात्रपतितशिष्टान्नभोजी स्वकर्म ख्यापयन् चरेद् भैक्ष्यमेककालाहारो द्वादशभिर्वर्षैःशुद्धिमाप्नोति" इति ।

तथा च विष्णुः—"ब्रह्महा द्वादशाब्दानि व्रतं कुर्याद् स्वदोषं ख्यापयन्"इति । तथा च याज्ञवल्क्यः—"शिरःकपाली ध्वजवान् भिक्षाशी वेदयन् ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात्" इति ।

स्वव्यापादितब्राह्मणशिरस एकदेशभूतं कपालं हस्ते यस्यास्तीति कपाली । तस्यैव कपालान्तरं दण्डाग्रे आरोप्यते तेन दण्डेन ध्वजवान् । ध्वजकपालौ हस्तेनैव धार्यौ । तदुक्तं मनुना—"कृत्वा शवशिरोध्वजम्"इति । स्वव्यापादितब्राह्मणशिरःकपालधारणं "ब्रह्मणो ब्राह्मणं घातयित्वा तस्यैव शिरःकपालमाददीत" इति शातातपवचनबलेनावगम्यते । तदभावेऽन्यब्राह्मणस्यैव ग्राह्यं न भिन्नवर्णस्य । कपालधारणं चिह्नार्थं न भिक्षार्थम् । "लोहितकेन द-

गडशरावेण ग्रामं प्रविशेत्''इत्यापस्तम्बेन पात्रविधानात् । तदुक्तं वसिष्ठेन–''सप्तागाराण्यसङ्कल्पितानि चरेद्भैक्षमेककालाहारः'' इति । ''चातुर्वर्ण्यं चरेद्भैक्ष्यम्''इति वर्णचतुष्टयभिक्षाशनविषयि सम्वर्तवचनम् । ''उत्तमवर्णगृहभिक्षाभावविषयं भिक्षाटनम्'' इत्युपवासवन्यफलाशनासक्तविषयम् । तदुक्तम्–''भिक्षयैव चरेद्ग्रामं वन्यैर्यदि न जीवति'' इति ।

तथा—

''ब्रह्मघ्नस्तु वनं गच्छेद् वनवासी जटी ध्वजी ।
वन्यान्येव फलान्यश्नन् सर्वकामविवर्जितः'' ॥ इति ।

''वेश्मनो द्वारि तिष्ठामि भिक्षार्थी ब्रह्मघातकः''
इति पराशरस्मरणाद् स्वदोषं ख्यापयन् भिक्षेत ।

''ख्यापयन्नात्मनः पापं ब्रह्मघ्नः पापकृत्तमः ।
अनेन स्वविधानेन द्वादशाब्दं व्रतं चरेत्'' ॥

इति वचनान्तरसद्भावाच्च ।

तथाऽन्येऽपि नियमाः शङ्खोक्ता दृश्यन्ते ।

''स्थानवीरासनी मौनी मौञ्जीदण्डकमण्डलुः ।
भिक्षाचर्याग्निकार्यं च कूश्माण्डीभिः सदा जपः'' ॥ इति ।

तस्य भवेदिति शेषेण पूरणीयं वचः ।

''उत्थितस्तु दिवा तिष्ठेदुपविष्टस्तथा निशि ।
एतद्वीरासनं नाम सर्वपापप्रणाशनम्'' ॥

इति वीराशनलक्षणम् ।

''सवनेषूदकस्पर्शी''इति त्रिषवणस्य विधानात्तदङ्गभूतमन्त्रादि-



प्राप्तिः । सन्ध्योपासनादिकमपि कर्तव्यम् । सर्वकर्मशेषत्वात्तस्य ।

इदं च प्रायश्चित्तं द्वित्रिब्राह्मणवधे आवृत्त्यैवानुष्ठेयम् । न तु तन्त्रन्यायेन सकृदनुष्ठानम् । ''एनसि गुरुणि गुरूणि'' इति वचनं न्यायतो यतः प्रबलम् । तच्च तृतीयावृत्तावेव । आयुषोऽल्पत्वात् ।

तदाह देवलः—

''विधेः प्राथमिकादस्माद् द्वितीये द्विगुणं चरेत् ।
तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः'' ॥ इति ।
''यस्मादनभिसन्धाय पापकर्म सकृत्कृतम् ।
तस्येयं निष्कृतिर्दृष्टा धर्मविद्भिर्मनीषिभिः'' ॥ इति ।

निष्कृतिर्नास्तीति द्वादशवार्षिकादिप्रायश्चित्तस्य चतुर्गुणे कालाधिक्यादायुषोऽल्पत्वादयुक्तम् । अतो महापातकव्यतिरिक्तपापेषु चतुरावृत्त्यादिकरणेऽपि चतुर्गुणादिप्रायश्चित्तं कर्तव्यमेव ।

एवं चीर्णप्रायश्चित्तस्य फलमाह । इदमुक्तं भविष्यति ।

''तत्र सामान्यतो हत्वा ब्राह्मणं सुरसत्तम ।
प्रायश्चित्ते व्यवसिते कर्ता यदि विपद्यते ॥
शुद्धस्तदहरेवासाविह लोके परत्र च'' ॥ इति ।

व्यवसिते कर्तुमुपक्रान्ते । इदं द्वादशवार्षिकं गुर्वादिव्यतिरिक्तविषयम् । ''गुरुं हत्वा श्रोत्रियं वा एतदेव व्रतमुत्तमादुच्छ्वासाच्चरेत् । नास्मिन् लोके प्रत्यापत्तिर्विद्यते'' इति । उत्तमादुच्छ्वासादामरणादित्यर्थः ।

मरणपर्यन्तं व्रतचर्याशक्तविषये तु शङ्खः–'प्रमाप्य द्वादश संवत्सरात् षट् त्रीन् सार्धं संवत्सरं वा व्रतान्यादिशेत् । तेषां मते

एडशरावेण ग्रामं प्रविशेत्''इत्यापस्तम्बेन पात्रविधानात्। तदुक्तं वसिष्ठेन—"सप्तागाराण्यसङ्कल्पितानि चरेद्भैक्षमेककालाहारः" इति। "चातुर्वर्ण्यं चरेद्भैक्ष्यम्''इति वर्णचतुष्टयभिक्षाशनविषयि सम्वर्तवचनम्। "उत्तमवर्णगृहभिक्षाभावविषयं भिक्षाटनम्" इत्युपवासवन्यफलाशनासक्तविषयम्। तदुक्तम्—"भिक्षयैव चरेद्ग्रामं वन्यैर्यदि न जीवति'' इति।

तथा—

"ब्रह्मघ्नस्तु वनं गच्छेद् वनवासी जटी ध्वजी।
वन्यान्येव फलान्यश्नन् सर्वकामविवर्जितः''॥ इति।

"वेश्मनो द्वारि तिष्ठामि भिक्षार्थी ब्रह्मघातकः"
इति पराशरस्मरणाद् स्वदोषं ख्यापयन् भिक्षेत।

"ख्यापयन्नात्मनः पापं ब्रह्मघ्नः पापकृत्तमः।
अनेन स्वविधानेन द्वादशाब्दं व्रतं चरेत्''॥

इति वचनान्तरसद्भावाच्च।

तथाऽन्येऽपि नियमाः शङ्खोक्ता दृश्यन्ते।

"स्थानवीरासनी मौनी मौञ्जीदण्डकमण्डलुः।
भिक्षाचर्याग्निकार्ये च कूश्माण्डीभिः सदा जपः'' ॥ इति।
तस्य भवेदिति शेषेण पूरणीयं वचः।

"उत्थितस्तु दिवा तिष्ठेदुपविष्टस्तथा निशि।
एतद्वीरासनं नाम सर्वपापप्रणाशनम्''॥

इति वीराशनलक्षणम्।

"सवनेषूदकस्पर्शी''इति त्रिषवणस्य विधानात्तदङ्गभूतमन्त्रादि-



प्राप्तिः। सन्ध्योपासनादिकमपि कर्तव्यम्। सर्वकर्मशेषत्वात्तस्य।

इदं च प्रायश्चित्तं द्वित्रिब्राह्मणवधे आवृत्त्यैवानुष्ठेयम्। न तु तन्त्रन्यायेन सकृदनुष्ठानम्। "एनसि गुरुणि गुरूणि" इति वचनं न्यायतो यतः प्रबलम्। तच्च तृतीयावृत्तावेव। आयुषोऽल्पत्वात्।

तदाह देवलः—

"विधेः प्राथमिकादस्माद् द्वितीये द्विगुणं चरेत्।
तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः'' ॥ इति।
"यस्मादनभिसन्धाय पापकर्म सकृत्कृतम्।
तस्येयं निष्कृतिर्दृष्टा धर्मविद्भिर्मनीषिभिः''॥ इति।

निष्कृतिर्नास्तीति द्वादशवार्षिकादिप्रायश्चित्तस्य चतुर्गुणे कालाधिक्यादायुषोऽल्पत्वादयुक्तम्। अतो महापातकव्यतिरिक्तपापेषु चतुरावृत्त्यादिकरणेऽपि चतुर्गुणादिप्रायश्चित्तं कर्तव्यमेव।

एवं चीर्णप्रायश्चित्तस्य फलमाह। इदमुक्तं भविष्यति।

"तत्र सामान्यतो हत्वा ब्राह्मणं सुरसत्तम।
प्रायश्चित्ते व्यवसिते कर्ता यदि विपद्यते॥
शुद्धस्तदहरेवासाविह लोके परत्र च''॥ इति।

व्यवसिते कर्तुमुपक्रान्ते। इदं द्वादशवार्षिकं गुर्वादिव्यतिरिक्तविषयम्। "गुरुं हत्वा श्रोत्रियं वा एतदेव व्रतमुत्तमादुच्छ्वासाचरेत्। नास्मिन् लोके प्रत्यापत्तिर्विद्यते'' इति। उत्तमादुच्छ्वासादामरणादित्यर्थः।

मरणपर्यन्तं व्रतचर्याशक्तविषये तु शङ्खः—'प्रमाप्य द्वादश संवत्सरात् षट् त्रीन् सार्द्धं संवत्सरं वा व्रतान्यादिशेत्। तेषां व्रते

गडशरावेण ग्रामं प्रविशेत्'' इत्यापस्तम्बेन पात्रविधानात् । तदुक्तं वसिष्ठेन—''सप्तागाराण्यसङ्कल्पितानि चरेद्भैक्षमेककालाहार:'' इति । ''चातुर्वर्ण्यं चरेद्भैक्ष्यम्'' इति वर्णचतुष्टयभिक्षाशनविषयि सम्वर्त-वचनम् । ''उत्तमवर्णगृहभिक्षाभावविषयं भिक्षाटनम्'' इत्युपवा-सवन्यफलाशनासक्तविषयम् । तदुक्तम्—''भिक्षयैव चरेद्ग्रामं वन्यै-र्यदि न जीवति'' इति ।

तथा—

''ब्रह्मघ्नस्तु वनं गच्छेद् वनवासी जटी ध्वजी ।
वन्यान्येव फलान्यश्नन् सर्वकामविवर्जितः'' ॥ इति ।

''वेश्मनो द्वारि तिष्ठामि भिक्षार्थी ब्रह्मघातकः''

इति पराशरस्मरणाद् स्वदोषं ख्यापयन् भिक्षेत ।

''ख्यापयन्नात्मनः पापं ब्रह्मघ्नः पापकृत्तमः ।
अनेन स्वविधानेन द्वादशाब्दं व्रतं चरेत्'' ॥

इति वचनान्तरसद्भावाच्च ।

तथाऽन्येऽपि नियमाः शङ्खोक्ता दृश्यन्ते ।

''स्थानवीरासनी मौनी मौञ्जीदण्डकमण्डलुः ।
भिक्षाचर्याग्निकार्यं च कूश्माण्डीभिः सदा जपः'' ॥ इति ।

तस्य भवेदिति शेषेण पूरणीयं वचः ।

''उत्थितस्तु दिवा तिष्ठेदुपविष्टस्तथा निशि ।
एतद्वीरासनं नाम सर्वपापप्रणाशनम्'' ॥

इति वीरासनलक्षणम् ।

''सवनेषूदकस्पर्शी'' इति त्रिषवणस्य विधानात्तदङ्गभूतमन्त्रादि-



प्राप्तिः । सन्ध्योपासनादिकमपि कर्तव्यम् । सर्वकर्मशेषत्वात्तस्य ।

इदं च प्रायश्चित्तं द्वित्रिब्राह्मणवधे आवृत्त्यैवानुष्ठेयम् । न तु तन्त्रन्यायेन सकृदनुष्ठानम् । ''एनसि गुरुणि गुरूणि'' इति वचनं न्यायतो यतः प्रबलम् । तच्च तृतीयावृत्तावेव । आयुषोऽल्पत्वात् ।

तदाह देवलः—

''विधेः प्राथमिकादस्माद् द्वितीये द्विगुणं चरेत् ।
तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः'' ॥ इति ।

''यस्मादनभिसन्धाय पापकर्म सकृत्कृतम् ।
तस्येयं निष्कृतिर्दृष्टा धर्मविद्भिर्मनीषिभिः'' ॥ इति ।

निष्कृतिर्नास्तीति द्वादशवार्षिकादिप्रायश्चित्तस्य चतुर्गुणे काला-धिक्यादायुषोऽल्पत्वादयुक्तम् । अतो महापातकव्यतिरिक्तपापेषु चतु-रावृत्त्यादिकरणेऽपि चतुर्गुणादिप्रायश्चित्तं कर्तव्यमेव ।

एवं चीर्णप्रायश्चित्तस्य फलमाह । इदमुक्तं भविष्यति ।

''तत्र सामान्यतो हत्वा ब्राह्मणं सुरसत्तम ।
प्रायश्चित्ते व्यवसिते कर्ता यदि विपद्यते ॥
शुद्धस्तदहरेवासाविह लोके परत्र च'' ॥ इति ।

व्यवसिते कर्तुमुपक्रान्ते । इदं द्वादशवार्षिकं गुर्वादिव्यतिरि-क्तविषयम् । ''गुरुं हत्वा श्रोत्रियं वा एतदेव व्रतमुत्तमादुच्छ्वासा-च्चरेत् । नास्मिन् लोके प्रत्यापत्तिर्विद्यते'' इति । उत्तमादुच्छ्वा-सादामरणादित्यर्थः ।

मरणपर्यन्तं व्रतचर्याशक्तविषये तु शङ्खः—'प्रमाप्य द्वादश संव-त्सरान् षट् त्रीन् सार्द्धं संवत्सरं वा व्रतान्यादिशेत् । तेषां व्रते

दण्डशरावेण ग्रामं प्रविशेत्" इत्यापस्तम्बेन पात्रविधानात्। तदुक्तं वसिष्ठेन—"सप्तागारारायसङ्कल्पितानि चरेद्भैक्षमेककालाहारः" इति। "चातुर्वर्ण्यं चरेद्भैक्ष्यम्" इति वर्णचतुष्टयभिक्षाशनविषयि सम्वर्तवचनम्। "उत्तमवर्णगृहभिक्षाभावविषयं भिक्षाटनम्" इत्युपवासवन्यफलाशनासक्तविषयम्। तदुक्तम्—"भिक्षयैव चरेद्ग्रामं वन्यैर्यदि न जीवति" इति।

तथा—

"ब्रह्मघ्नस्तु वनं गच्छेद् वनवासी जटी ध्वजी।
वन्यान्येव फलान्यश्नन् सर्वकामविवर्जितः"॥ इति।

"वेश्मनो द्वारि तिष्ठामि भिक्षार्थी ब्रह्मघातकः"
इति पराशरस्मरणाद् स्वदोषं ख्यापयन् भिक्षेत।

"ख्यापयन्नात्मनः पापं ब्रह्मघ्नः पापकृत्तमः।
अनेन स्वविधानेन द्वादशाब्दं व्रतं चरेत्"॥

इति वचनान्तरसद्भावाच्च।

तथाऽन्येऽपि नियमाः शङ्खोक्ता दृश्यन्ते।

"स्थानवीरासनी मौनी मौञ्जीदण्डकमण्डलुः।
भिक्षाचर्याग्निकार्यं च कूश्माण्डीभिः सदा जपः"॥ इति।
तस्य भवेदिति शेषेण पूरणीयं वचः।
"उत्थितस्तु दिवा तिष्ठेदुपविष्टस्तथा निशि।
एतद्वीरासनं नाम सर्वपापप्रणाशनम्"॥

इति वीरासनलक्षणम्।

"सवनेषूदकस्पर्शी" इति त्रिषवणस्य विधानात्तदङ्गभूतमन्त्रादिप्राप्तिः। सन्ध्योपासनादिकमपि कर्तव्यम्। सर्वकर्मशेषत्वात्तस्य।



इदं च प्रायश्चित्तं द्वित्रिब्राह्मणवधे आवृत्त्यैवानुष्ठेयम्। न तु तन्त्रन्यायेन सकृदनुष्ठानम्। "एनसि गुरुणि गुरूणि" इति वचनं न्यायतो यतः प्रबलम्। तच्च तृतीयावृत्तावेव। आयुषोऽल्पत्वात्।

तदाह देवलः—

"विधेः प्राथमिकादस्माद् द्वितीये द्विगुणं चरेत्।
तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः"॥ इति।
"यस्मादनभिसन्धाय पापकर्म सकृत्कृतम्।
तस्येयं निष्कृतिर्दृष्टा धर्मविद्भिर्मनीषिभिः"॥ इति।

निष्कृतिर्नास्तीति द्वादशवार्षिकादिप्रायश्चित्तस्य चतुर्गुणे कालाधिक्यादायुषोऽल्पत्वादयुक्तम्। अतो महापातकव्यतिरिक्तपापेषु चतुरावृत्त्यादिकरणेऽपि चतुर्गुणादिप्रायश्चित्तं कर्तव्यमेव।

एवं चीर्णप्रायश्चित्तस्य फलमाह। इदमुक्तं भविष्यति।

"तत्र सामान्यतो हत्वा ब्राह्मणं सुरसत्तम।
प्रायश्चित्ते व्यवसिते कर्ता यदि विपद्यते॥
शुद्धस्तदहरेवासाविह लोके परत्र च"॥ इति।

व्यवसिते कर्तुमुपक्रान्ते। इदं द्वादशवार्षिकं गुर्वादिव्यतिरिक्तविषयम्। "गुरुं हत्वा श्रोत्रियं वा एतदेव व्रतमुत्तमादुच्छ्वासाच्चरेत्। नास्मिन् लोके प्रत्यापत्तिर्विद्यते" इति। उत्तमादुच्छ्वासादामरणादित्यर्थः।

मरणपर्यन्तं व्रतचर्याशक्तविषये तु शङ्खः—'प्रमाप्य द्वादश संवत्सरात् षट् त्रीन् सार्द्धं संवत्सरं वा व्रतान्यादिशेत्। तेषां मते

गडशरावेण ग्रामं प्रविशेत्''इत्यापस्तम्बेन पात्रविधानात् । तदुक्तं वसिष्ठेन—''सप्तागाराण्यसङ्कल्पितानि चरेद्भैक्षमेककालाहारः'' इति । ''चातुर्वर्ण्यं चरेद्भैक्षम्''इति वर्णचतुष्टयभिक्षाशनविषयि सम्वर्तवचनम् । ''उत्तमवर्णगृहभिक्षाभावविषयं भिक्षाटनम्'' इत्युपवासवन्यफलाशनासक्तविषयम् । तदुक्तम्—''भिक्षयैव चरेद्ग्रामं वन्यैर्यदि न जीवति'' इति ।

तथा—

''ब्रह्मघ्नस्तु वनं गच्छेद् वनवासी जटी ध्वजी ।
वन्यान्येव फलान्यश्नन् सर्वकामविवर्जितः'' ।। इति ।

''वेश्मनो द्वारि तिष्ठामि भिक्षार्थी ब्रह्मघातकः''

इति पराशरस्मरणाद् स्वदोषं ख्यापयन् भिक्षेत ।

''ख्यापयन्नात्मनः पापं ब्रह्मघ्नः पापकृत्तमः ।
अनेन स्वविधानेन द्वादशाब्दं व्रतं चरेत्'' ।।

इति वचनान्तरसद्भावाच्च ।

तथाऽन्येऽपि नियमाः शङ्खोक्ता दृश्यन्ते ।

''स्थानवीरासनी मौनी मौञ्जीदण्डकमण्डलुः ।
भिक्षाचर्याग्निकार्यं च कूश्माण्डीभिः सदा जपः'' ।। इति ।
तस्य भवेदिति शेषेण पूरणीयं वचः ।
''उत्थितस्तु दिवा तिष्ठेदुपविष्टस्तथा निशि ।
एतद्वीरासनं नाम सर्वपापप्रणाशनम्'' ।।

इति वीराशनलक्षणम् ।

''सवनेषूदकस्पर्शी''इति त्रिषवणस्य विधानात्तदङ्गभूतमन्त्रादि-



प्राप्तिः । सन्ध्योपासनादिकमपि कर्तव्यम् । सर्वकर्मशेषत्वात्तस्य ।

इदं च प्रायश्चित्तं द्वित्रिब्राह्मणवधे आवृत्त्यैवानुष्ठेयम् । न तु तन्त्रन्यायेन सकृदनुष्ठानम् । ''एनसि गुरुणि गुरूणि'' इति वचनं न्यायतो यतः प्रबलम् । तच्च तृतीयावृत्तावेव । आयुषोऽल्पत्वात् ।

तदाह देवलः—

''विधेः प्राथमिकादस्माद् द्वितीये द्विगुणं चरेत् ।
तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः'' ।। इति ।
''यस्मादनभिसन्धाय पापकर्म सकृत्कृतम् ।
तस्येयं निष्कृतिर्दृष्टा धर्मविद्भिर्मनीषिभिः'' ।। इति ।

निष्कृतिर्नास्तीति द्वादशवार्षिकादिप्रायश्चित्तस्य चतुर्गुणे कालाधिक्यादायुषोऽल्पत्वादयुक्तम् । अतो महापातकव्यतिरिक्तपापेषु चतुरावृत्त्यादिकरणेऽपि चतुर्गुणादिप्रायश्चित्तं कर्तव्यमेव ।

एवं चीर्णप्रायश्चित्तस्य फलमाह । इदमुक्तं भविष्यति ।

''तत्र सामान्यतो हत्वा ब्राह्मणं सुरसत्तम ।
प्रायश्चित्ते व्यवसिते कर्ता यदि विपद्यते ।।
शुद्धस्तदहरेवासाविह लोके परत्र च'' ।। इति ।

व्यवसिते कर्तुमुपक्रान्ते । इदं द्वादशवार्षिकं गुर्वादिव्यतिरिक्तविषयम् । ''गुरुं हत्वा श्रोत्रियं वा एतदेव व्रतमुत्तमादुच्छ्वासाच्चरेत् । नास्मिन् लोके प्रत्यापत्तिर्विद्यते'' इति । उत्तमादुच्छ्वासादामरणादित्यर्थः ।

मरणपर्यन्तं व्रतचर्याशक्तविषये तु शङ्खः—'प्रमाप्य द्वादश संवत्सरात् षट् त्रीन् सार्द्धं संवत्सरं वा व्रतान्यादिशेत् । तेषां मते

गोसहस्रं तदर्द्धं तस्यार्द्धं च दद्यात् । सर्वेषां वर्णानामानुपूर्व्येण" इति ।

ब्राह्मणस्य ब्राह्मणवधे यत्प्रायश्चित्तं तद्द्विगुणत्रिगुणादि क्षत्रियादीनाम् ।

तदुक्तमङ्गिरसा—

"पर्षद्या ब्राह्मणानां तु राज्ञां सा द्विगुणा मता ।
वैश्यानां त्रिगुणा प्रोक्ता पर्षभूम्ना व्रतं स्मृतम् ॥
शूद्रो वा ब्राह्मणं हत्वा प्रायश्चित्तं चतुष्टयम्" । इति ।

यद्वि—"प्रायश्चित्तं यदाम्नातं ब्राह्मणस्य महर्षिभिः ।
पादोनं क्षत्रियः कुर्यादर्द्धं वैश्यः समाचरेत् ।
शुद्रः समाचरेत् पादमशेषेष्वपि पाप्मसु" ॥

इति चतुर्विंशतिमतवचनम् । तत्प्रातिलोम्यानुष्ठितचतुर्विधसाहसव्यतिरिक्तविषयम् । अग्रिमविषयेऽङ्गिराः—

"गृहस्थोक्तानि पापानि कुर्वन्त्याश्रमिणो यदि ।
शौचवच्छोधनं कुर्युरर्वाग् ब्राह्मणदर्शनात्" ॥ इति ।

ब्राह्मणदर्शनं ब्रह्मसाक्षात्कारः । ब्रह्मचारिणः षोडशवर्षादूर्ध्वं द्विगुणं व्रतम् । ततः पूर्वं "पादो बालेषु दातव्यः"इत्युक्तं व्रतम् ।

## पापानुग्राहकादीनां प्रायश्चित्तम् ।

इदं द्वादशवार्षिकं व्रतं साक्षाद्धन्तुरेव । अनुग्राहकप्रभृतीनां तु प्रत्यवायतरतमभावेन योज्यम् । ततश्च प्रयोजयिता अनुमन्ता कर्ता च । प्रयोजयितापि त्रिविधः । आज्ञापयिता अभ्यर्थयिता उपदेष्टा च । पुनर्द्विविधः—अनुमन्ता निमित्ती च । "स्वर्गनरकफलेषु कर्मसु भागिनः, यो भूय आरभते तस्मिंश्च फलविशेषः" इत्यापस्तम्बाभिमतं मतम् । घातकस्य द्वादशाब्दं व्रतम् । अनुग्राहकस्य पादोनं नववार्षिकम् । आज्ञापयितुरभ्यर्थयितुश्चानुग्राहकापेक्षया न्यूनपापत्वादर्द्धं षड्वार्षिकम् । उपदेष्टुरर्द्धमध्ये पादोनं त्रैवार्षिकं व्रतम् । अनुमन्तुरर्द्धपादं निमित्तिनश्चरणं प्रायश्चित्तम् । कः पुनर्निमित्ती—



"आक्रुष्टस्ताडितो वापि धनैर्वापि प्रयोजितः ।
यदुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्" ॥

इत्युक्तो निमित्ती । तदुक्तं सुमन्तुना—

"तिरस्कृतो यदा विप्रो हत्वाऽऽत्मानं मृतो यदि ।
निर्गुणः सहसा क्रोधाद् गृहक्षेत्रादिकारणात् ॥
त्रैवार्षिकं व्रतं कुर्यात् प्रतिलोम सरस्वतीम् ।
गच्छेद्वापि विशुद्ध्यर्थं तस्य पापस्य निश्चितम्" ॥ इति ।

निर्निमित्तभर्त्सने तेनैवोक्तम्—

"अत्यर्थं निर्गुणो विप्रो ह्यत्यर्थं निर्गुणोपरि ।
क्रोधाद्वै म्रियते यश्च निर्निमित्तं च भर्त्सितः ॥
वत्सरत्रितयं कुर्यान्नरः कृच्छ्रविशुद्धये" ॥ इति ।

यदा तु निमित्त्यत्यन्तं सगुणः, आत्मघाती अत्यन्तनिर्गुणस्तदैकवर्षमेव ब्रह्महत्याव्रतं कुर्यात् । तदाह सुमन्तुः—

केशश्मश्रुनखादीनामकृत्वा वपनं वने ।
ब्रह्मचर्यं चरेद्विप्रो वर्षेणैकेन शुध्यति" ॥ इति ।

यथा हन्ता प्रायश्चित्ती, यथा वा निमित्ती, तथैवानुमन्त्रादयोऽपि प्रायश्चित्तभाजः । तदुक्तं पैठीनसिना—

"हन्ता मन्त्रोपदेष्टा च तथा सम्प्रतिपादकः ।
प्रोत्साहकः सहायश्च तथा मर्मानुदेशकः ॥
आश्रयः शस्त्रदाता च भक्तदाता विकर्मिणाम् ।
उपेक्षकः शक्तिमांश्च दोषवक्तानुमोदकः ॥
अकार्यकारिणस्तेषां प्रायश्चित्तं प्रकल्पयेत् ।
यथाशक्त्यनुरूपं च तेषां दण्डं प्रकल्पयेत्" ॥

बालवृद्धस्त्रीरोगिणां साक्षाद्धन्तृत्वेऽप्यर्द्धमेव प्रायश्चित्तमङ्गिरा आह । एतेषां मध्ये यो यो वधस्य प्रत्यासन्नस्तस्य तस्याधिकं व्रतम् । विप्रकृष्टस्य तदपेक्षया न्यूनं योज्यम् ।

साक्षात्कर्तुरपि वयोविशेषेण प्रायश्चित्तह्रासो भवति ।

तदाह यमः—"अशीतिर्यस्य वर्षाणि बालो वान्यूनषोडशः ।
प्रायश्चित्तार्द्धमर्हन्ति व्याधितश्च तथा स्त्रियः ॥

क्वचित् कर्तुः प्रतिनिधिर्दृश्यते—

"अपूर्णैकादशाब्दस्य चतुर्वर्षाधिकस्य च ।
प्रायश्चित्तं चरेद् भ्राता पिताऽन्ये वाथ बान्धवाः" ॥ इति ।

यदपि च तेनाभ्यधायि—

"अतो बाल्पतरस्यास्य नापराधो न पातकम् ।
राजदण्डो न तस्याऽस्ति प्रायश्चित्तं च नेष्यते" ॥ इति ।

तदपि प्रायश्चित्ताल्पत्वाभिप्रायम् । न तु सर्वात्मना तदभावप्रतिपादनपरम् । "पादो बालेषु दातव्यः सर्वपापेष्वयं विधिः" इति स्मरणात् ।



"उद्दिश्य कुपितो हत्वा तोषितः श्रावयेत् पुनः ।
तस्मिन् मृते न दोषोऽस्ति द्वयोरुच्छ्रावणे कृते" ॥ इति ।

द्वयोरात्मघातकाक्रोशकयोः । जनसमक्षमाक्रोशकस्य ममापराधो नास्तीत्युच्चारिते सतीति यावत् । तदुक्तं सुमन्तुना—

"असम्बन्धेन यः कश्चिद् द्विजः प्राणान् परित्यजेत् ।
तस्यैव तद्भवेत्पापं न तु यत्परिकीर्तयेत्" ॥ इति ।

असंबन्धेनामाक्रोशनादिनिमित्तमन्तरेणेत्यर्थः ।

मनुः—

"ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान् परित्यजेत् ।
मुच्यते ब्रह्महत्याया गोप्ता गोब्राह्मणस्य तु" ॥

स्वयं जीवनरक्षणे कृतेऽपि शुद्धः । रक्षणमकुर्वन्वा स्वशक्त्यनुसारेण तदर्थं प्रवृत्तः सन्, द्वादशवार्षिकं व्रतं कुर्वन् व्रतसमाप्तेः पूर्वमेव यद्यपि मृतस्तथापि शुद्धः ।

ननु द्वादशवार्षिके व्रते किं पूर्णेषु वर्षेषु शुद्धिः किं वाऽपरिपूर्णेष्वपीति सन्देहे यदि मध्य एकस्य ब्राह्मणस्य द्वादशानां गवां वा रक्षणं तदा मध्य एव शुद्धिः ।

तदाह शङ्खः—"द्वादशे वर्षे शुद्धिं प्राप्नोति । अन्तरा ब्राह्मणं मोचयित्वा गवां द्वादशानां वा परित्राणात् सद्य एवावभृथस्नानाद्वा शुद्धिमाप्नुयात्" इति । अवभृथस्नाने शङ्खोक्ते विशेषः—

"शिष्टानां भूमिदेवानां नरदेवसमागमे ।
समे वावभृथे स्नात्वा ह्यश्वमेधेन शुध्यति" ॥ इति ।

ऋत्विजो भूमिदेवाः । यजमानो नरदेवः । तत्समागमे स्वकीय-

पापत्रयं ख्यापयित्वाऽवभृथं गत्वा ततः स्नात्वा शुद्धः स्यादिति यावत् ।

मनुनाऽन्येऽपि प्रायश्चित्तविशेषा उक्ताः ।

"लक्ष्यं शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मनः ।
प्रास्येदात्मानमग्नौ वा समिद्धेत्रिरवाक्शिराः ॥
यजेत वाश्वमेधेन स्वर्जिता गोसवेन वा ।
अभिजिद्विश्वजिद्भ्यां वा त्रिवृताग्निष्टुतापि वा ॥
जपन्वान्यतमं वेदं योजनानां शतं व्रजेत् ।
ब्रह्महत्यापनोदाय मितभुङ् नियतेन्द्रियः ॥
सर्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत् ।
धनं वा जीवनोपायं गृहं वा सपरिच्छदम् ॥
हविष्यभुग्वानुचरेत् प्रतिस्नातं सरस्वतीम् ।
जपेद्वा नियताहारस्त्रिर्वै वेदस्य संहिताः ॥" इति ॥

एतेषां सर्वेषामप्युपलक्षणानां कामकाराकामकारविद्वदादिविषयतया व्यवस्था ।

अङ्गिराः—"प्राणान्तिकं तु यत्प्रोक्तं व्रतं तत्कामकारविषयम्" इत्याह । भृग्वग्निपतनमपि कामकृतमहापापविषयम् । स्वतन्त्रमेव गोब्राह्मणादिसन्त्राणवद्द्वादशवार्षिकान्तर्भूतत्तत्रियाधिकारकाश्वमेधाद्यनुष्ठानमपि कामकारणमरणादिस्थानीयम् । स्वर्जितादयस्त्रैवर्णिकस्याहिताग्नेर्द्वादशवार्षिकेण सह विकल्पन्ते । आहिताग्नेः कामकारकृतमहापातके द्विजातिकर्मसु सन्ध्योपसनव्यतिरिक्तेषु नाधिकारः । वैतानस्याग्नौ प्रक्षेपः । शालाग्नेः शमनं च ।

अकामकारकृते तु पुत्रादीनां यावत्प्रायश्चित्तानुष्ठानं तावदग्नीनां पालनम् ।



तदुक्तमुशनसा—

"आहिताग्निस्तु यो विप्रो महापातकवान् भवेत् ।
प्रायश्चित्तेन शुध्येत्तु तदग्नीनां तु का गतिः ॥
वैतानं प्रक्षिपेदग्नौ शालाग्निं शमयेद्बुधः" ॥ इति ।

इदं कामकारविषयम् । अकामकारविषये तु तेनैवोक्तम्—

"महापातकसंयुक्तो दैवात् स्यादग्निमान् यदि ।
पुत्रादिः पालयेदग्नीन् युक्तश्चादोषसंक्षयात् ॥
प्रायश्चित्तं ततः कुर्यात् कुर्वन्वा म्रियते यदि ।
गृह्यं निर्वापयेच्छ्रौतमाश्वसेत्सपरिच्छदम्" ॥ इति ॥

कामकृतात्यन्ताभ्यासविषये योगिनोक्तम्—"लोमत्वक्लोहितमांसमेदस्नाय्वस्थिमज्जाभिर्होमोऽष्टभिर्मन्त्रैः । अष्टौ मन्त्रा वसिष्ठोक्ताः—"लोमानि मृत्योर्जुहोमि लोमभिर्मृत्युं वासय" इतिप्रथमः । एवमन्येऽप्यूह्याः सप्त । तथानन्तगुणवतो विदुषो निर्धनस्य प्रमादेन निर्गुणव्यापादनेऽरण्ये त्रिःसंहिताजपो वेदजपः । मिताशनो भूत्वा प्लक्षप्रस्रवणादारभ्य पश्चिमाद्रिपर्यन्तं स्रोतः प्रतिसरस्वतीं गत्वा शुद्धः । निर्गुणस्य धनिकस्य निर्गुणहनने सर्वस्वदानं वेदविदे ब्राह्मणाय । तत्रापि सान्वयेन सोपस्कारगृहदानम् । निरन्वयेन सर्वस्वदानं कर्तव्यम्" इति ।

अपहन्तुर्मूर्खस्य धनवतो जातिमात्रव्यापादने सर्वनियमैः संवत्सरं कृच्छ्राचरणम् । वत्सरान्ते हिरण्यमणिगोधान्यानि भूमिसर्पिषां दानम् । मनसा ब्राह्मणवधेऽभक्तो द्वादशरात्रमुपवसेत् । इदं

च मनोऽवसितब्रह्महत्यस्य तदैवोपरतजिघांसस्य ज्ञेयम् ।

षण्ढब्राह्मणस्य ज्ञानतो वधे शूद्रहत्याव्रतं चान्द्रायणं पराकद्वितयं वा कार्यम् । तदुक्तं षट्त्रिंशन्मते—

"षण्ढं तु ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेत् ।
चान्द्रायणं वा कुर्वीत पराकद्वयमेव वा" ॥ इति ।

अज्ञानपूर्वकवधे बृहस्पतिः—

"अरुणायाः सरस्वत्याः संगमे लोकविश्रुते ।
शुद्धेत् त्रिषवणस्नायी त्रिरात्रोपोषितो द्विजः" ॥ इति ।

इमानि च द्वादशवार्षिकादिधनदानपर्यन्तानि व्रतानि ब्राह्मणस्यैव ब्राह्मणवधे ज्ञातव्यानि । क्षत्रियवैश्यशूद्राणां तु द्विगुणत्रिगुणचतुर्गुणानि ज्ञातव्यानि । "पर्षद्या ब्राह्मणानाम्" इत्यङ्गिरोवचनात् । तथा च प्रजापतिः—

"द्विगुणं त्रिगुणं चैव चतुर्गुणमथापि वा ।
क्षत्रविट्शूद्रजातीनां ब्राह्मणस्य वधे व्रतम्" ॥ इति ।

"प्रायश्चित्तं यदाम्नातं ब्राह्मणस्य महर्षिभिः ।
पादोनं क्षत्रियः कुर्यादर्द्धं वैश्यः समाचरेत् ॥
शूद्रः समाचरेत् पादमशेषेष्वपि पाप्मसु" ॥

इति वचनं तु प्रातिलोम्यानुष्ठितचतुर्विधसाहसव्यतिरिक्तविषयम् । साहसानि तु मनुष्यमारणचौर्यपरदाराभिमर्शनपारुष्यरूपादीनि ।

"दण्डप्रणयनं कार्यं वर्णजात्युत्तमाधमैः" इतिस्मृतिबलेन मूर्द्धावसिक्तब्राह्मणवधे ब्राह्मणादतिरिक्तं क्षत्रियान्यूनमर्द्धाद्धद्वादशवार्षिकं कल्प्यम् ।



एवं प्रतिलोमेत्यभानानामपि प्रायश्चित्तगौरवमूहनीयम् । योगिना निमित्तान्तरेषु ब्रह्महत्याप्रायश्चित्तातिदेश उक्तः । तथाहि—दीक्षणीयाया अर्द्धमवभृथात् प्राक् सोमयागस्थयोः क्षत्रियवैश्ययोर्हन्ता ब्रह्महत्याव्रतं चरेत् । तथा विवाहितासु संभूतस्त्रीपुंजनैरनभिव्यक्तं गर्भं हत्वा यद्वर्णपुरुषवधे यत् प्रायश्चित्तं तद्वर्णगर्भवधे तत्प्रायश्चित्तं चरेत् । "हत्वा गर्भमविज्ञातम्" इति मनुस्मरणात् । यद्यपि ब्राह्मणगर्भस्य ब्राह्मणत्वादेव निवृत्तं व्रतं प्राप्नोत्येव तथापि स्त्रीत्वस्यापि संभवात् । स्त्रीशूद्रविट्क्षत्रियवध इत्युपपातकत्वेन । ततः प्रायश्चित्तप्राप्तौ तन्निवृत्तये ब्राह्महत्याव्रतं विधीयते ।

अत्रेयीनिषूदको हन्यामानात्रेयीवर्णानुरूपं व्रतं चरेत् । आत्रेयी रजस्वला स्त्री । तथाच वसिष्ठः—

"रजस्वलामृतुस्नातामात्रेयीमाहुरत्र हि" इति । अत्रिगोत्रजा च । "अत्रिगोत्रजा नारीति" विष्णुस्मरणात् ।

तथा—आहिताग्निभार्यावधेऽपि द्वादशाब्दं व्रतम् । तथाङ्गिराः—

"आहिताग्नेर्द्विजाग्र्यस्य तथा पत्नीमनिन्दताम् ।
ब्रह्महत्याव्रतं कुर्यादात्रेयीघ्नस्तथैव च" ॥ इति ।

"सवनस्थां स्त्रियं हत्वा ब्रह्महत्याव्रतं चरेत्" इति पराशरस्मरणाच्च । यमः—

"जन्मप्रभृतिसंस्कारैः संस्कृता मन्त्रवत्तथा ।
गर्भिणी त्वथवा या स्यादात्रेयीं तां विदुर्बुधाः" ॥ इति ।

गर्भवधे यथावर्णमित्युक्तावपि "अनात्रेयीं राजन्यहिंसायां राजन्यां वैश्यहिंसायां वैश्यां शूद्रहिंसायां शूद्रीं हत्वा संवत्सरम्" इति

वसिष्ठस्मरणादशक्तं प्रति व्यवस्था ज्ञेया । एवमुत्तरत्र शूद्रगर्भहननेऽपि ब्रह्महत्याव्रतं संवत्सरं चरेत् । सवनस्थादिस्त्रीवधे ब्रह्महत्याव्रतोपदेशात् । व्यतिरिक्तस्त्रीवधस्योपपातकत्वमेव । स्त्रीशूद्रविट्क्षत्रियवध इत्युपपातकमध्ये पाठात् । प्रक्रान्तस्य व्रतस्य मध्ये विपत्तावपि पापक्षय आवश्यकः—

"प्रायश्चित्ते व्यवसिते कर्ता यदि विपद्यते ।
पूतस्तदहरेव स्यादिह लोके परत्र च" ॥

इति हारीतस्मरणात् । व्यासोऽपि—

"धमार्थं यतमानस्तु न चेच्छक्नोति मानवः ।
प्राप्तो भवति तत्पुण्यमत्र मे नास्ति संशयः" ॥ इति ।

वधोद्यतमात्रेऽपि वधव्रतम् । तथा योगी—

"चरेद्व्रतमहत्वापि घातार्थं चेत्समागतः" ॥ इति ।

यथावर्णमित्येव । "अहत्वापि यथावर्णं ब्रह्महत्याव्रतं चरेत्" इति स्मरणात् । ततश्च हनिष्यामीति निश्चयेनागतस्य दैववशात् प्रहारेऽपि न मृतश्चेत् तदा पादोनं ब्रह्महत्याव्रतम् । मरणे संपूर्णम् । उपदेशातिदेशादल्प इति दिक् ।

## अथ सुरापानप्रायश्चित्तम् ।

अथ द्वितीयमहापातकसुरापानप्रायश्चित्तमभिधीते । अन्नविकारः सुरा । अन्नविकारव्यतिरिक्तपनसादिविकारो मद्यम् । तत्र केचित् सुरायां त्रैविध्यं गौडी माध्वी पैष्टी चेत्याहुः । मद्ये तु पानसं द्राक्षं माधूकं खार्जूरं तालमैक्षवं मधूत्थं सैतमारिष्टमैरेयं ना-



लिकेरजमित्येकादशविधत्वं मन्यन्ते । तत्र मद्यशब्दः सुरासामान्यवचनः । सुराशब्दो विशेषवचनः । यद्यपि सुराशब्दो मुख्यवृत्त्या पिष्टविकार एव वर्त्तते । तथापि गुणवृत्त्या इतरेष्वपि वृत्तिर्ज्ञायते । तथोक्तं मनुना—

"सुरा वै मलमन्नानां पाप्मा च मलसंभवः ।
तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्" ॥ इति ।

तथा पुलस्त्यः—

"पानसं द्राक्षमाधुर्यं खार्जूरं तालमैक्षवम् ।
मधूत्थं सैतमारिष्टमैरेयं नालिकेरजम् ॥
समानानि विजानीयान्मद्यान्येकादशैव तु ।
द्वादशं तु सुरा मद्यं सर्वेषामधमं स्मृतम्" ॥ इति ।

तत्र—

"यक्षरक्षःपिशाचानां मद्यं मांसं तथा स्मृतम् ।
तद् ब्राह्मणेन नात्तव्यं देवानामश्नता हविः" ॥

इति मनुस्मरणाद् ब्राह्मणस्य सकलमद्यनिषेधः प्रतीयते । राजन्यवैश्ययोस्तु—"कामादपि हि राजन्यो वैश्यो वापि कथञ्चन ।
मद्यमेव सुरां पीत्वा न दोषं प्रतिपद्यते" ॥

इति वृद्धयोगिवचनात् सुरानिषेधः प्रतीयते ।

तदुक्तं मनुना—

"गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा ।
यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः" ॥ इति ।

गौडीमाध्व्योर्ग्रहणं पैष्टीसाम्यार्थम् । पिष्टविकारस्यैव मुख्यसु-

रात्वात् । तथा श्रुतिरपि—"तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्" इति । द्विजोत्तमैरिति ब्राह्मणोत्तमैरिति । तस्माद् ब्राह्मणस्य सर्वमद्यनिषेधो निरङ्कुशः प्रतीयते । न राजन्यवैश्ययोः । तयोर्माध्वीगौडीपानस्याभ्यनुज्ञानात् । "उभौ मध्वासवक्षीबौ दृष्टौ मे केशवार्जुनौ" इति व्यासवचनात् ।

अनुपनीताविवाहितविषयेऽप्ययं निषेधः प्रतीयते । "पादो बालेषु दातव्यः" इति प्रायश्चित्तविधानात् । "पादो बालेषु दातव्यः" इत्यकामकारविषयम् । कामकारे तु "विहितं यदकामानां कामात्तद् द्विगुणं भवेत्" इत्यङ्गिरःस्मरणात् षड्वार्षिकमेव न मरणान्तिकम् ।

ननु—

"मद्यमूत्रपुरीषाणां भक्षणे नास्ति कश्चन ।
दोषस्त्वापञ्चमादर्वागूर्ध्वं पित्रोः सहृद्गुरोः" ॥

इति कुमारवचनपर्यालोचनया दोषाभावोऽवगम्यते । सत्यम् । एतस्य दोषाल्पत्वख्यापनपरत्वेऽपि वाक्यान्तरैर्दोषप्रतिपादनाद् दोषः प्रतीयते । तथा जातूकर्ण्यः—

"अनुपेतस्तु यो बालो मद्यं मोहात् पिबेद्यदि ।
तस्य कृच्छ्रत्रयं कुर्यान्माता भ्राता तथा पिता" ॥ इति ।

अत एव प्रागुपनयनात् कृतदोषस्योपनयनमेव प्रायश्चित्तम् । तस्मान्मद्यसुरानिषेधवाक्ये जातमात्रस्य व्यवच्छेदकत्वश्रवणात् । ब्राह्मणानामुत्पत्तिप्रभृति सर्वमद्यप्रतिषेधः । त्रैवर्णिकानामुत्पत्तिप्रभृति पैष्टीप्रतिषेधः । राजन्यवैश्ययोस्तु कदाचिदपि न गौड्यादि-



मद्यप्रतिषेधः । शूद्रादीनां तु न सुराप्रतिषेधो नापि मद्यप्रतिषेध इति सर्वमनवद्यम् ।

अत्र प्रायश्चित्तम् । सुराजलगोघृतगोमूत्रगोपयसामन्यतममग्निसन्निभमायसेन ताम्रपात्रेण वा प्राणवियोगपर्यन्तं पिबेत् । मरणाच्छुद्धो भवति । तथा चाह प्रचेताः—"सुरापोऽग्निवर्णां सुरामायसेन ताम्रेण वा पात्रेण पिबेत्" इति । तथा गुरुः—

"सुरापाने कामकृते ज्वलन्तीं तां विनिक्षिपेत् ।
मुखे तथा विनिर्दग्धे मृतः शुद्धिमवाप्नुयात् ॥
गोमूत्रमग्निवर्णं वा पिबेत्सलिलमेव च ।
कुर्यात् पानशतं तावद्यावत्प्राणैर्विमुच्यते" ॥

तथा मनुः—

"सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत् ।
तथास्य काये निर्दग्धे मुच्यते किल्बिषात्ततः" ॥ इति ।

मारणान्तिकप्रायश्चित्तं तु पर्षदा न देयम् । तत्स्वयमेव ज्ञात्वा कुर्यात् ।

इदं च प्रायश्चित्तं कामतः सकृत्पाने "सुरापानं सकृत्कृत्वाप्यग्निवर्णां सुरां पिबेत्" त्यङ्गिरःस्मरणाज्ज्ञातव्यम् ।

"अभ्यासे तु सुरायाश्चाग्निवर्णां सुरां पिबेत्" ।

इति वसिष्ठवचनं तु सुरात्रयव्यतिरिक्तमद्यविषयम् । मानवीये—"मोहात्" इति पदम् । मोदादिति केचित् ।

अथवा—एवं प्रायश्चित्तं कुर्यात् । छागादिलोमनिर्मितवस्त्रमात्रतश्चीरवल्कलमात्रव्रतो वा ब्रह्महत्याव्रतं द्वादशवार्षिकं व्रतं कुर्यात् ।

तदुक्तं प्रचेतसा—"सुरापगुरुतल्पगौ चीरवल्कलवाससौ ब्रह्महत्याव्रतं चरेयाताम्" इति । तथा—अकामकारकृते याज्ञवल्क्येनाप्युक्तम्—

"वालवासा जटी वापी ब्रह्महत्याव्रतं चरेत् ।
पिण्याकं वा कणान्वापि भक्षयेत्त्रिसमानिशि" ॥ इति ।

छागादिलोमनिर्मितकम्बलमात्रतो वालवासाः । जटी वेति वाशब्दो वपनविकल्पार्थः । अत्र ब्रह्महत्याव्रतस्यादिष्टत्वेऽपि सुरापानस्य महापातकत्वेन प्रसिद्धत्वाद् द्वादशवार्षिकमेवानुष्ठेयम् । न पादोनम् । अथवा द्वादशवार्षिकानुष्ठानाशक्तौ पिण्याकभक्षणं कणभक्षणं रूपं वा कल्प्यम् । तच्चाहारान्तरपरित्यागेन पिण्याकं कणान्वा सकृद्वर्षत्रयं रात्रौ भक्षयेत् । तदुक्तं मनुना—

"कणान्वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि" इति ।

इदं प्रायश्चित्तमुदकबुद्ध्या सुरापाने छर्दने च कृते ज्ञेयम् ।
"एतदेव व्रतं कुर्यान्मद्यपश्छर्दने कृते" इति व्यासस्मरणात् ।

यच्च बौधायनवचनम्—"त्रैमासिकममत्या सुरापाने कृच्छ्राब्द-पादं चरित्वा पुनरुपनयनम्" इति ।

यद्वा यमवचनम्—"सुरां पीत्वा द्विजं हत्वा रुक्मं हृत्वा द्विजन्मनः ।
संयोगं पतितैर्गत्वा द्विजश्चान्द्रायणं चरेत्"इति ।

यदपि बार्हस्पत्यम्—"गौडीं माध्वीं पैष्टीं वा सुरां पीत्वा कृच्छ्रं पराकं चान्द्रायणं वा चरेत्" इति । तदनन्यौषधसाध्यव्याध्युपशमार्थपानविषयं ज्ञेयम् । वेदविदं प्रत्यङ्गिरा आह—

"बृहस्पतिसवेनेष्ट्वा सुरापो ब्राह्मणः पुनः ।
शुद्धत्वं ब्रह्मणो गच्छेदित्येषा वैदिकी श्रुतिः" ॥



सकृद्गौणसुरापाने—

"भूमिप्रदानं यः कुर्यात् सुरां पीत्वा द्विजोत्तमः ।
पुनर्न च पिबेज्जातु संस्कृतः स विशुध्यति" ॥ इति ।

द्रव्याभावे समुद्रोदकस्नानम्, सावित्र्यष्टसहस्रं होमः प्रत्यहं, त्रिरात्रमुपवासः, तप्तकृच्छ्रः, अश्वमेधावभृथस्नानश्च । अशुष्कसुराभाण्डस्थोदकपाने शुष्कभाण्डोदकपाने च छर्दनं घृतप्राशनमहोरात्रोपवासश्चेति शातातपोक्तं द्रष्टव्यम् ।

यत्तु बौधायनः—

"सुरापानस्य यो भाण्डेष्वपः पर्युषिताः पिबेत् ।
शङ्खपुष्पीविपक्वं तु क्षीरं स तु पिबेत् त्र्यहम्" ॥ इति ।

तत्र पर्युषितत्वादधिकम् । अकामतोऽभ्यासे—

"आपः सुराभाजनस्था मद्यभाण्डस्थितास्तथा ।
पञ्चरात्रं पिबेत् पीत्वा शङ्खपुष्पीशृतं पयः" ॥

इति मनूक्तं द्रष्टव्यम् । कामतः पाने "सप्तरात्रं पयः पिबेत्" इति । कामतोऽभ्यासे "द्वादशाहं क्षीरेण सुब्राह्मीसुवर्चलां पिबेत्" इति द्रष्टव्यम् । सुरापस्य मुखगन्धाघ्राणे तु—

"ब्राह्मणस्तु सुरापस्य गन्धमाघ्राय सोमपः ।
प्राणानप्सु त्रिरायम्य घृतं प्राश्य विशुध्यति" ॥

इति मनूक्तं द्रष्टव्यम् । तत्सोमयाजिन एव, मतिपूर्वे द्विगुणम् ।
असोमयाजिनस्तु जातिभ्रंशकरोक्तं द्रष्टव्यम् ।

इति सुरापानप्रायश्चित्तमुक्तम् ।

## अथ मद्यपानप्रायश्चित्तम् ।

अधुना मद्यपानव्रतमुच्यते । पनसादिजन्यं मदकारणं द्रवद्रव्यं मद्यम् । द्रवद्रव्यस्याभ्यवहरणं पानम् । अभ्यवहरणं च कण्ठादधोनयनम् । न ताल्वादिसंयोगमात्रम् ।

"मद्यपश्च द्विजः कुर्यान्नदीं गत्वा समुद्रगाम् ।
चान्द्रायणं ततश्चीर्णे कुर्याद् ब्राह्मणभोजनम्" ॥

इदं कामकारविषयम् । अकामकारे गुरुः—

"पीत्वा प्रमादतो मद्यमतिकृच्छ्रं चरेद् द्विजः ।
कारयेत्तस्य संस्कारं शक्त्या विप्रांस्तु भोजयेत्" ॥ इति ।

तथा योगेश्वरः—

"अज्ञानात्तु सुरां पीत्वा रेतो विण्मूत्रमेव वा ।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः" ॥ इति ।

यदाऽज्ञानाद् ब्राह्मण उदकबुध्या सुरां मद्यं पिबति । विप्रादयो रेतोमूत्रादि प्राश्नन्ति । ते त्रयोऽपि वर्णास्तप्तकृच्छ्रपूर्वं पुनरुपनयनप्रायश्चित्तमर्हन्ति । पुनरुपनयनप्रकार अश्वलायनेनोक्तः—

"अथोपनीतपूर्वस्य कृताकृतं केशवपनं मेधाजननं च । अनिरुक्तं परिधानं कालश्च । तत्सवितुर्वृणीमहे इति सावित्रीम्" इति ।

योगी—

"पतिलोकं न सा याति ब्राह्मणी या सुरां पिबेत् ।
इहैव सा शुनी गृध्री सूकरी चोपजायते" ॥ इति ।

द्विजातिग्रहणं द्विजातिभार्यामात्रोपलक्षणार्थम् । तस्माद् "ब्राह्मणराजन्यौ" इति सुरापानप्रतिषेधविधौ लिङ्गस्यापि विवक्षितत्वाद् वर्णत्रयभार्याणामपि प्रतिषेधे सिद्धे पुनर्वचनं द्विजातिभार्यायां शूद्रायामपि सुरापानप्रतिषेधप्राप्त्यर्थम् । शूद्राया मद्यपानेऽपि पातित्याभावः । शूद्रानिषेधात् । तत्संसर्गे ब्राह्मणोऽपि न पातित्यम् । पापसम्बन्धो भवत्येव ।



## अथ सुवर्णस्तेयप्रायश्चित्तम् ।

अथ क्रमप्राप्तं सुवर्णस्तेयप्रायश्चित्तम् । सुवर्णस्य स्तेयं सुवर्णस्तेयम् । सुवर्णशब्दः परिमाणविशिष्टहेमद्रव्यवाची । नाकृत्यविकृतिन्यायेन सुवर्णजातिमात्रवाचीति सुवर्णपरिमाणं च योगिनोक्तम्—

"जालसूर्यमरीचिस्थं त्रसरेणु रजः स्मृतम् ।
तेऽष्टौ लिक्षास्तु तास्तिस्रो राजसर्षप उच्यते ॥
गौरस्तु ते त्रयः षड्भिर्यवो मध्यस्तु ते त्रयः ।
कृष्णलः पञ्च ते माषस्ते सुवर्णस्तु षोडश" ॥ इति ।

तत्र सुवर्णं ब्राह्मणस्यैव हृतं महापातकाय । "ब्राह्मणसुवर्णहरणं महापातकम्" इत्यापस्तम्बस्मरणात् । अतः षोडशमाषपरिमिते हेम्नि सुवर्णशब्दः परिभाषत इति पारिभाषिकी संज्ञा । अतः "कार्यकालं संज्ञापरिभाषयोरुपस्थानम्"इति भगवदुक्तेर्ब्राह्मणसुवर्णापहरणं महापातकमिति प्रयोगे कृतपरिमाणस्यैव सुवर्णस्य ग्रहणमिति युक्तं वक्तुम् ।

अत्र प्रायश्चित्तप्रकारो मनुनाऽभ्यधायि—

"अत ऊर्ध्वं प्रवक्ष्यामि सुवर्णस्तेयनिष्कृतिम् ।

सुवर्णस्तेयकृद्विप्रो राजानमधिगम्य तु" ॥ इत्यादि ।

अयमत्र प्रकारः—उक्तपरिमाणविशिष्टं ब्राह्मणसुवर्णमपहृत्य स्वविशुद्धिं स्ववधेन राजकर्तृकेण सम्पादयितुं प्रहारसाधनं खादिरमायसं वा मुसलमादाय राजसमीपे गच्छेत् । गत्वा चेदृशं पापकारिणं मां प्रहरेति वदेत् । ततो राजकर्तृकान्मुसलसाधनकाद्वधाच्छुद्धिर्जायते । अथ मुसलप्रहारेण न मृतस्तदापि शुध्यति । अथवा राज्ञा तस्मिन् हते निराधारः सकलोऽपि पुत्रमित्रकलत्रभृत्यादिपोष्यवर्गः किं करिष्यतीत्यनुकम्पया रक्षितोऽपि शुद्ध एवेति भवति ।

तदुक्तं मनुना—

"अत ऊर्ध्वं प्रवक्ष्यामि सुवर्णस्तेयनिष्कृतिम् ।
सुवर्णस्तेयकृद्विप्रो राजानमधिगम्य तु ।
स्वकर्म ख्यापयन् ब्रूयात् मां भवाननुशास्त्विति ॥
स्कन्धेनाधाय मुसलं लकुटं वापि खादिरम् ।
असिं वोभयतस्तीक्ष्णमायसं दण्डमेव वा ॥
शासनाद्वा विमोक्षाद्वा स्तेनदोषाद्विमुच्यते ।
अशासित्वा तु तं राजा स्तेनस्याप्नोति किल्बिषम्" ॥ इति ।

सकृत्ताडने मृतः शुध्येन्मरणात् । मुक्तो वा जीवन्नपि शुध्येदिति यावत् । विप्र इति नरमात्रोपलक्षणपरम् । "प्रायश्चित्तीयते नरः" इति "नरः" इत्यस्य प्रकृतत्वात् । इदं च मरणान्तिकप्रायश्चित्तं मतिपूर्वं सुवर्णस्तेयादिविषयम् ।

"मरणान्तेऽपि यत् प्रोक्तं प्रायश्चित्तं महर्षिभिः ।
तत्तु कामकृते पापे विज्ञेयं नात्र संशयः" ॥



इति मध्यमाङ्गिरःस्मरणात् । इदं च राज्ञा हननं ब्राह्मणव्यतिरिक्तविषयम् । यतो हि—

"न जातु ब्राह्मणं हन्यात् सर्वपापेष्ववस्थितम्" ।

इति मानवीयवचनम् । आत्मानं स्तेनो हन्यात् । तेन च शुद्धः स्यात् ।

तदुक्तं वसिष्ठेन—"स्तेनः प्रकीर्णकेशो राजानमभियाचेत । ततस्तस्मै राजा औदुम्बरं शस्त्रं दद्यात् । तेनात्मानं प्रमापयेत् । मरणात्पूतो भवतीति विज्ञायते" इति । औदुम्बरं ताम्रमयम् ।

इदं हि प्रायश्चित्तं गुरुश्रोत्रिययागस्थादिब्राह्मणद्रव्यापहारविषयम् । क्षत्रियाद्यपहर्तृविषयं वा । इदं सर्वमपि प्रायश्चित्तं तत्कामकारविषयम् ।

अकामकारविषये तु प्रायश्चित्तान्तरम् । राज्ञेऽनिवेद्यैव सुरापव्रतं द्वादशवार्षिकं कुर्यात् । द्वादशवार्षिकानुष्ठानाशक्तौ तु धनाभावे विप्रतुष्टिकरं कुटुम्बार्थे धनं वा दद्यात् । आत्मतुल्यं सुवर्णं वा दद्यात् । तदाह योगी—

"अनिवेद्य तु यः शुध्यै सुरापव्रतमाचरेत् ।
आत्मतुल्यं सुवर्णं वा दद्याद्वा विप्रतुष्टिकृत्" ॥ इति ।

बहुधनाभावे विप्रतुष्टिकरं कुटुम्बार्थे धनं दद्यात् ।

ननु ब्रह्मवधसुरापानादेरकामतः सम्भवेऽपि सुवर्णहरणं न सम्भवति इति चेन्न । वस्त्रप्रान्तग्रथितसुवर्णादेरज्ञानतोऽप्यपहारसम्भवात् । रजतादिबुध्या वा तत्सम्भवः । यदा हि रजतबुध्या गृहीतमन्यहस्ते दत्तं नाशितं वा न पुनः स्वामिने प्रत्यर्पितमिति । रसवेधाद्यापादितसुवर्णस्य ताम्रादेरपहारे तु मुख्यजातिसमयाभावान्नेदं प्रायश्चित्तम् ।

निर्गुणस्वामिकधनापहारे "एतदेव व्रतं स्तेये पादन्यूनं समाचरेत्" इति व्यासवचनात्पादोनं नववार्षिकम् ।

निर्गुणस्यैव क्षुत्क्षामकुटुम्बरक्षणाय हेमहरणे—

"षडब्दं वा चरेत् कृच्छ्रं यजेद्वा क्रतुना द्विजः ।
तीर्थानि चाधिगच्छन्वा ततस्तेनाद्विमुच्यते" ॥

इत्यत्रिस्मरणाज्ज्ञेयम् । अपहरणानन्तरमेव जातानुतापस्यापहृतधनस्य प्रत्यर्पणे त्यागे वा आपस्तम्बोक्तं चतुर्थाकालमिताशनेन त्रिवर्षमनुष्ठानं ज्ञेयम् । अपहारस्य भोगपर्यन्तत्वात्प्रागुपभोगान्निवृत्तौ मुख्यस्यापहारस्याभावादेतदेव व्रतम् ।

मनसा सुवर्णापहारे "सुवर्णस्तेयी द्वादशरात्रं वायुभक्षस्तिष्ठेत्"इति सुमन्तुप्रोक्तं ज्ञेयम् । सर्वेष्वपि सुवर्णपरिमितसुवर्णाधिकापहारप्रायश्चित्तेषु स्त्रीबालवृद्धादिष्वर्द्धं ज्ञेयम् ।

षोडशमाषन्यूनपरिमाणे व्रतमुच्यते । यतो द्वित्रादिमाषात्मकसुवर्णाहरणं तु क्षत्रियादिहेमहरणवदुपपातकमेव न महापातकम् । अत एव तत्र प्रायश्चित्तान्तरमुपदिष्टं षट्त्रिंशन्मते—

"बालाग्रमात्रेऽपहृते प्राणायामं समाचरेत् ।
लिक्षामात्रेऽपि च तथा प्राणायामत्रयं बुधः ॥
राजसर्षपमात्रे च प्राणायामचतुष्टयम् ।
गायत्र्यष्टसहस्रं च जपेत्पापविशुद्धये ॥
गौरसर्षपमात्रे तु सावित्रीं वै दिनं जपेत् ।
यवमात्रसुवर्णस्य प्रायश्चित्तं दिनद्वयम् ॥



सुवर्णकृष्णलं त्वेकमपहृत्य द्विजोत्तमः ।
कुर्यात्सान्तपनं कृच्छ्रं तत्पापस्यापनुत्तये ॥
अपहृत्य सुवर्णस्य माषमात्रं द्विजोत्तमः ।
गोमूत्रयावकाहारस्त्रिभिर्मासैर्विशुध्यति ॥
सुवर्णस्यापहरणे वत्सरं यावकी भवेत् ।
ऊर्द्ध्वं प्राणान्तिकं ज्ञेयमथवा ब्रह्महव्रतम्" ॥ इति ।

तस्मादयमत्र निष्कर्षः—सकृत्पापे गुरुश्रोत्रिययागस्थादिब्राह्मणात् षोडशमाषाधिकसुवर्णापहरणे मरणान्तिकं प्रायश्चित्तम् । सुवर्णपर्यन्तहरणेऽपि वधः । बलात्सुवर्णपरिमाणादर्वागपि हरणे वधः । तद्वदेकादशाधिकं स्वामिने दत्त्वा व्रतं तदेव । निर्द्धनस्वामिकधनापहारेण चाब्दम् । आपदि षडब्दम् । श्रोत्रियधनिकेन यज्ञः । निर्द्धनश्रोत्रियेण तीर्थम् । तच्च मरणं राजकर्तृकं स्वकर्तृकं वा । तपश्चर्या कर्तव्या च । तत्र वधो जातिमात्रनिर्गुणविषयः । सगुणश्रोत्रियवनस्थविषयं तु तपः । वने वसन् ब्रह्महत्याव्रतं चरेदित्यर्थः । निर्गुणस्यापि प्रमादेन सुवर्णापहारे व्रतमेतद् द्वादशवार्षिकम् । न वधः । द्वादशवार्षिकाशक्तो बहुधनश्चेत्तदात्मतुल्यं धनं दद्यात् । तावद्धनाभावे विप्रतुष्टिकरं यावज्जीवं कुटुम्बं वा दद्यात् । निर्गुणस्वामिकापहरणे नवाब्दं व्रतम् । निर्गुणस्यैव क्षुत्क्षामकुटुम्बभरणार्थं हरणे षडब्दं व्रतम् । तदशक्तौ यज्ञादि, तदशक्तौ तीर्थयात्रादि । धनापहारानन्तरमेवानुतापेन धने दत्ते त्यक्ते वा त्रैवार्षिकं यावकाहारः । मनसाऽपहारे द्वादशदिनमुपवासः । षट्त्रिंशन्मते—तु सुवर्णपरिमिते वार्षिकमुक्तम् । तन्मन्वादिबहुश्रुतिविरुद्धमुपेक्ष्यम् । इदं प्रायश्चित्तमुक्तं सुवर्णपरिमितहेमहरणे ।

बलात्सुवर्णन्यूनापहारेऽपि वर्षं यावकाहारः । माषमात्रापहारे त्रैमासिकं गोमूत्रयावकाहारः । कृष्णलापहारे सान्तपनकृच्छ्रम् । यवमात्रे दिनद्वयम् । गौरसर्षपे दिनं सावित्रीजपः । राजसर्षपे प्राणायामचतुष्टयं गायत्र्यष्टसहस्रं जपः । लिक्षामात्रे प्राणायामत्रयम् । वालाग्रमात्रे प्राणायामषट्कमिति बहुमतम् ।

"आत्मतुल्यं धनं दद्यात् तुष्ट्यर्थं वा क्रतुं चरेत् ।
षडब्दं वा चरेत् कृच्छ्रं जपतीर्थादिकं तथा" ॥ इति ।

तत्रात्मतुल्यहेमदानमत्यन्तधनिकविषयम् । क्रतुर्धनिकश्रोत्रियविषयः । तीर्थयात्रासहितं षडब्दं निर्द्धनश्रोत्रियविषयमिति व्यवस्था ।

यत्तु बहुमतमित्यपि यदपि चाश्वरत्नस्त्रीभूधेनुहरणं सुवर्णस्तेयसमं तेष्वर्द्धं पूर्वोक्ताज्ज्ञेयम् । रूप्यहरणे चान्द्रायणम् । दशगद्याणकादूर्ध्वं शतपर्यन्तं द्विगुणम् । शतादूर्ध्वं सहस्रपर्यन्तं त्रिगुणम् । अतः परं हेमविधिः । सर्वलोहप्रभृतिधातुहरणे पराकं चरेत् । धान्यानां हरणे कृच्छ्रम् । तिलहरणे चान्द्रायणम् । रत्नहरणे च चान्द्रायणं व्रतम् ।

तदुक्तं षट्त्रिंशन्मते [ चतुर्विंशतिमते ]—

"रूप्यं हृत्वा द्विजो लोभाच्चरेच्चान्द्रायणं व्रतम् ।
गद्याणदशकादूर्ध्वमाशताद् द्विगुणं चरेत् ॥
आसहस्रं तु त्रिगुणमूदूर्ध्वं हेमविधिः स्मृतः ।
सर्वेषां धातुलोहानां पराकं तु समाचरेत् ॥
धान्यानां हरणे कृच्छ्रं तिलानामैन्दवं स्मृतम् ।
रत्नानां हरणे विप्रश्चरेच्चान्द्रायणं व्रतम्" ॥



एतदपि वचनम्, तद् गद्याणसहस्रादधिकरजतहरणे सुवर्णस्तेयप्रायश्चित्तप्रतिपादनार्थम् । न पुनस्तन्निवृत्त्यर्थम् । रत्नापहरणे चान्द्रायणाभिधानं तु गद्याणसहस्राद्धीनमूल्यरत्नहरणविषयम् । अत ऊर्ध्वं सुवर्णस्तेयसममित्येवाभीप्सा ।

इति सुवर्णस्तेयव्रतम् ।

## अथ गुरुतल्पप्रायश्चित्तम् ।

अथ क्रमप्राप्तं गुरुतल्पगप्रायश्चित्तमभिधीयते । तत्र निष्कालको घृताभ्यक्तो गुरुतल्पगो लोहशयने शयनं कृत्वा तत्र ज्वलन्तीमायसीं प्रतिमामाश्लिष्य लोहशयनं सूर्माश्लेषं वा विधाय स्वयमेव लिङ्गं वा सवृषणं छित्वाऽञ्जलावाधाय स्वपापं प्रख्यापयन् नैर्ऋतदिशं गच्छेत् । गुर्वभिमुखं तिष्ठेद् यावच्छरीरपातमिति ।

तथोक्तं मनुना—

"गुरुतल्पगोऽभिभाष्यैनस्तल्पे स्वप्यादयोमये ।
सूर्मां ज्वलन्तीं वाश्लिष्य मृत्युना स विशुध्यति ॥
स्वयं वा शिश्नवृषणावुत्कृत्याधाय चाञ्जलौ ।
नैर्ऋतिं दिशमातिष्ठेदानिपातादजिह्मगः" ॥ इति ।

तथा च याज्ञवल्क्योऽपि—

"तप्तेऽयःशयने सार्धमायस्या योषिता स्वपेत् ।
गृहीत्वोत्कृत्य वृषणौ नैर्ऋत्यां वोत्सृजेत्तनुम्" ॥ इति ।

तथा अङ्गिराः—

"गुरुतल्पी शिलां तप्तामायसीं वा स्त्रियं विशेत् ।
उत्कृत्य वृषणौ वापि धारयेदञ्जलौ स्वयम् ॥
मरणायाथवा पद्यां प्रव्रजेद्दिशमुत्तराम् ।
शरीरस्य विमोक्षेण मुच्यते कर्मणोऽशुभात्" ॥ इति ।

तथा वसिष्ठः—

"निष्कालको घृताभ्यक्तो गोमयेनाग्निना पादप्रभृत्यात्मानमवदाहयेत्, मरणात् पूतो भवति" इति ।

सूर्मा कार्ष्णायसी स्त्रीप्रतिकृतिः । के शिरसि अलकाः केशाः कालकाः । निर्गताः कालका यस्मादसौ निष्कालको मुण्डितमस्तकः । अत्र च तप्तलोहशिलाशयनं तप्तलोहस्त्रीप्रकृत्यालिङ्गनं च भिन्नं प्रायश्चित्तद्वयमिति प्रतिभाति । मन्वादिभिस्तथोक्तत्वादिति ।

योगिमते तु—तप्तयोषिदालिङ्गनमेव प्रधानम्। कुत्रत्येत्यधिकरणापेक्षायां तप्तायःशयने इति तत्रोत्तरपक्षेण सह वैकल्पिकं पक्षद्वयमित्येव युक्तम् । तत्र शिश्नकर्त्तनोत्तरं पृष्ठतोऽनिरीक्षमाण एव गमनं कुर्यात् । तदुक्तं शङ्खेन—"अनवेक्षमाणो व्रजेत्" इति । नैर्ऋतदिग्गमनगुरुदर्शनयोर्विकल्पः ।

तदुक्तम्—

"अथवा शिश्नवृषणावुत्कृत्य प्रतिगृह्य च ।
गुरोरभिमुखस्तिष्ठेत् पूतो भवति किल्बिषात् ॥
नैर्ऋतिं वा दिशं गच्छेदानिपातादजिह्मगः" ॥ इति ।
"आसामन्यतमां गच्छन् गुरुतल्पग उच्यते ।



शिश्नस्योत्कर्तनात्तत्र नान्यो दण्डो विधीयते" ॥

इति नारदस्मरणादयमेवात्र दण्ड उच्यते । गुरुशब्दोऽभिषेककृत्पितृवाची मुख्यवृत्त्या ।

"निषेकादीनि कर्माणि यः करोति यथाविधि ।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते" ॥

इति मनुस्मरणान्निषेकादिकर्तुर्जनकस्यैव गुरुत्वप्रतीतेः । अनेनैवाभिप्रायेण "स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति" इति योगीश्वरेण पितुरेव गुरुत्वमभिहितम् । आचार्योपाध्यायज्येष्ठभ्रातृ—ऋत्विक्भयरक्षकान्नदातॄणां गुरुत्वाभिधानं शब्दप्रवृत्तिनिमित्तभूतपूजार्हत्वमात्रेणोपपद्यते । अन्यथा एतेषामपि गुरुत्वे वसिष्ठाद्युक्तम्—"आचार्यादेस्तु भार्यासु गुरुतल्पव्रतं चरेत्" इत्यादिकमातिदेशिकप्रायश्चित्तविधानमनुपपन्नं स्यात् । "उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता" इत्यादिव्यासगौतमवचनानि पूजाविधिशेषतया स्तुत्यर्थतयोपपद्यन्ते । अतो निषेकादिकर्तुर्जनकस्यैव मुख्यगुरुत्वात् पितृपत्नीगमनमेव महापातकम् । गमनमत्र चरमधातुविसर्गपर्यन्तं विवक्षितम्, न तु सम्बन्धमात्रम् । अत एव रेतःसेकात् प्राङ्निवृत्तौ न महापातकतया व्यपदेशः । इदं च व्रतं जननीमकामतो गत्वा, तत्सपत्नीं सवर्णामुत्तमां च कामतो गत्वाऽनुष्ठेयम् ।

ननु—

"मातरं यदि वा गच्छेद् भगिनीं स्वसुतां तथा ।
एतास्तु मोहितो गत्वा त्रीणि कृच्छ्राणि सञ्चरेत् ॥
चान्द्रायणत्रयं कुर्याल्लिङ्गच्छेदेन शुध्यति" ॥

इति पाराशरीयं वचनं व्रतान्तरं विधत्ते तद्विरोध इति चेन्मैवम् । अत्र प्रायश्चित्तत्रयमुपदिश्यते । एकं हि प्राजापत्यत्रयरूपम्, द्वितीयं चान्द्रायणत्रयरूपम्, तृतीयं लिङ्गच्छेदरूपमिति । तच्च त्रितयं मैथुनप्रकारविषयतया सुयोज्यम् । तथा हि स्मरणकीर्तनकेलिप्रेक्षणगुह्यभाषणरूपपञ्चप्रकारापराधरूपमैथुनविषयता प्रथमस्य प्रतीयते, संकल्पाध्यवसायविषयता द्वितीयस्य, क्रियानिवृत्तिविषयता त्वतिमहत्त्वात्तृतीयस्येति ।

ननु भवत्वेवं तथापि मोहित इत्युक्त्याऽकामकृतविषयता प्रतीयते । न च संकल्पाध्यवसायावकामकृतौ सम्भवतः । सत्यम् । महान्धकारादौ मातेयमित्यज्ञात्वा गमिष्याम्येनामिति संकल्पोऽध्यवसायश्च संभवति । अथवा मज्जननीति ज्ञानेऽपि शास्त्रादर्शनेन प्रत्यवायगौरवमज्ञात्वा प्रवृत्तस्य संकल्पोऽध्यवसायश्च सम्भवति । माता चात्र जननी, भगिनी सोदरस्य सुता सवर्णाभार्योत्पन्ना च, कथं च तिसृणां साम्यमुच्यते । भगिन्यादावावृत्तिविषयतया साम्यस्य वक्तुं शक्यत्वात् । अतः सम्यगुक्तम्—"जननीमकामतो गत्वा" इदं प्रायश्चित्तमिति । न चेदं कामकारविषयमिति मन्तव्यम् । तत्र द्वादशवार्षिकषड्वार्षिकत्रैवार्षिकाणां वक्ष्यमाणत्वात् ।

इदं च व्रतं मुख्यस्यैव पुत्रस्य । इतरेषां पुत्राणां पुत्रकार्यकर्तृत्वेऽप्यपुत्रत्वात् ।

तदुक्तं मनुना—

"क्षेत्रजादीन् सुतानेतानेकादश यथोदितान् ।
पुत्रप्रतिनिधीनाहुः क्रियायोगान्मनीषिणः ॥" इति ।



ततश्चेदं प्रायश्चित्तं जननीमकामतो गत्वा तत्सपत्नीं सवर्णां कामतो गत्वाऽनुष्ठेयमिति सिद्धम् ।

"विज्ञाय पितृभार्यां तु सवर्णां योऽधिगच्छति ।
जननीं चाप्यविज्ञाय नामृतः शुद्धिमाप्नुयात्" ॥

इति स्मरणात् कामतो जननीसकृद्गमने तु "निष्कालको घृताभ्यक्ताङ्गो गोमयाग्निनाऽऽपादप्रभृत्यात्मानमवदाहयेत्" इति वासिष्ठं द्रष्टव्यम् । तथा—अकामतोऽभ्यासे एतदेव व्रतं द्रष्टव्यम् । कामतोऽभ्यासेन जननीगमने कृतवपनस्य घृताभ्यक्ताङ्गस्यार्द्रगोमयाग्निना शरीरदाहः प्रायश्चित्तम् । गोमयाग्नित्वाविशेषेऽपीषदार्द्रत्वविशुष्कत्वादिभेदेन चिरक्षिप्रदाहिनो वधस्य भेदोपपत्तेः । ततश्च सकृत्कामतो जननीगमनेऽसकृत्कामतश्चेति द्वयं यथाक्रमम् ।

ननु गोमयाग्निवधे कथञ्चित्तारतम्येऽप्ययःशयनलिङ्गच्छेदजन्यवधयोः कथं तारतम्येन व्यवस्था ।

उच्यते । लिङ्गच्छेदवधो हि बहुप्रयाससाध्यः अयःशयनजन्योऽल्पप्रयाससाध्यः । तत्रोभयेच्छान्यतरेच्छादिभेदेन विषयो व्यवस्थाप्यते । सवर्णोत्तमवर्णपितृदारगमनेऽकामकृते द्वादशवार्षिकं तत्र व्रतम् ।

"अधःशायी जटाधारी पर्णमूलफलाशनः ।
एककालं समश्नन्वै वर्षे तु द्वादशे गते ॥
रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः ।
व्रतेनैतेन शुध्यन्ति महापातकिनस्त्विमे" ॥ इति शङ्खस्मृतेः ।

सवर्णोत्तमवर्णापितृभार्यासु कामतः प्रवृत्तस्य रेतःसेकात्प्राङ् निवृत्तौ षड्वार्षिकम् । अकामस्तु त्रैवार्षिकम् । जनन्यां तु कामतः प्रवृत्तस्य रेतस्सेकात्प्राङ्निवृत्तौ द्वादशवार्षिकम् । अकामतः षड्वार्षिकमिति । हीनवर्णगुरुदारेषु रेतःसेकात्प्राङ् निवृत्तौ तप्तकृच्छ्रम् । ब्राह्मणीपुत्रस्य शूद्रजातीयगुरुभार्याभिगमने मतिपूर्वे वर्षत्रयं कृच्छ्रं प्रायश्चित्तम् । सवर्णाव्यभिचारिगुरुदारगमनेऽप्यबुद्धिपूर्वे वेदजपसहितं चान्द्रायणत्रयं वा कुर्यात् । अत्रैव कामतः प्रवृत्तौ वार्षिकं ब्रह्महत्याव्रतम् । अकामतः प्रवृत्तौ षाण्मासिकम् । मतिपूर्वे क्षत्रियागमने तु नववार्षिकम् ।

योगिना हि—"मातुः सपत्नीं भागिनीमाचार्यतनयां तथा" इति गुरुतल्पव्रतातिदेशान्नेदमातिदेशिकं सवर्णगुरुभार्यागमनिविषयम् । तत्र कामतोऽकामतश्च मरणान्तिकद्वादशवार्षिकयोरभिधानात्क्षत्रियादिविषयतैव युक्ता । क्षत्रियायामेव कामतोऽभ्यासे मरणान्तिकम् ।

तदुक्तं कण्वेन—

"मत्या गत्वा पुनर्भार्यां गुरोः क्षत्रसुतां द्विजः ।
अण्डाभ्यां रहितं लिङ्गमुत्कृत्य स मृतः शुचिः" ।। इति ।

वैश्यायां गुरुभार्यायां षड्वार्षिकम् , शूद्रायां गुरुभार्यायां त्रैवार्षिकमिति विवेकः ।

तथा च स्मृत्यन्तरम्—"ब्रह्मपुत्रस्य क्षत्रियायां मातरि गमने पादहान्या द्वादशवार्षिकम् , एवमेव सवर्णासु" इति । क्षत्रियायां नववार्षिकम् , वैश्यायां षड्वार्षिकम् , शूद्रायां त्रैवार्षिकमित्यर्थः ।



तथा क्षत्रियापुत्रस्य वैश्यायां मातरि नववार्षिकम् , शूद्रायां षड्वार्षिकमिति । वैश्यायां कामतोऽभ्यासे मरणान्तिकं व्रतम् ।

तदुक्तं लौगाक्षिणा—

"गुरुभार्यां तु यो वैश्यां गच्छेद्यस्तु पुनः पुनः ।
लिङ्गाग्रं छेदयित्वा तु ततः शुध्येत्स किल्बिषात्" ।। इति ।

शूद्रायां कामतोऽभ्यासगमने द्वादशवार्षिकम् । तदुक्तं सुमन्तुना—

"पुनः शूद्रां गुरोर्गत्वा बुद्ध्या विप्रः समाहितः ।
ब्रह्मचर्यं स दुष्टात्मा संचरेद् द्वादशाब्दिकम्" ।। इति ।

क्षत्रियायां गुरुभार्यायामबुद्धिपूर्वं गमने त्रैवार्षिकमष्टकालाशनं ज्ञेयम् । तदुक्तं यमेन—

"कालेऽष्टमे वा भुञ्जानो ब्रह्मचारी सदा व्रती ।
स्थानासनाभ्यां विहरंस्त्रिरह्नोऽभ्युपयन्नपः ।
अधःशायी त्रिभिर्वर्षैस्तदपोहेत पातकम्" ।। इति ।

कामतोभ्यासेऽण्डमात्रकर्तनम् । तदुक्तं जातूकर्ण्येन—

"गुरोः क्षत्रसुतां भार्यां पुनर्गत्वा तु कामतः ।
अण्डमात्रं समुत्कृत्य शुध्येज्जीवन् मृतोऽपि वा" ।। इति ।

वैश्यायामकामतो गमने त्र्यब्दं कृच्छ्रं चरेत् । तदुक्तं मनुना—

"गमने गुरुभार्यायाः पितृभार्यागमे तथा ।
अब्दत्रयमकामात्तु कृच्छ्रं नित्यं समाचरेत्" ।। इति ।

अत्रैवाभ्यासेन मरणान्तिकं ब्रह्मचर्यम् । तदुक्तं हारीतेन—

"अभ्यस्य विप्रो वैश्यायां गुरोरज्ञानमोहितः ।
षडङ्गब्रह्मचर्यं च सञ्चरेद्यावदायुषम्" ।। इति ।

षडङ्गानि च वाक्पाण्युपस्थचक्षुःश्रोत्रमनांसि । अत्रेयं व्यवस्था—क्षत्रियया पितृपत्न्या प्रोत्साहितस्य कामतः प्रवृत्तस्य विप्रस्य रेतःसेकात् प्राङ् निवृत्तौ मासत्रयं प्राजापत्याचरणम्। उभयेच्छातः प्रवृत्तौ मासत्रयमतिकृच्छ्राचरणम्। स्वयमेव प्रोत्साहनं कृत्वा प्रवृत्तस्य मासत्रयं कृच्छ्रानुष्ठानम् ।

"कृच्छ्रं चैवातिकृच्छ्रं च तथा कृच्छ्रातिकृच्छ्रकम् ।
चरेन्मासत्रयं विप्रः क्षत्रियागमने गुरोः" ॥

इति व्यासस्मरणात् ।

"चान्द्रायणं तप्तकृच्छ्रमतिकृच्छ्रं तथैव च ।
सकृद्गत्वा गुरोर्भार्यामज्ञानात् क्षत्रियां गुरोः" ॥

इति कण्वस्मरणादकामतः प्रवृत्तस्य रेतःसेकात्पूर्वं कृच्छ्रातिकृच्छ्रचान्द्रायणानि । अत्रापीयं विषयव्यवस्था—तया प्रोत्साहितस्यातिकृच्छ्रः, उभयेच्छातः प्रवृत्तस्य तप्तकृच्छ्रः, स्वेन प्रोत्साहितायां चान्द्रायणम्, इति । वैश्यायामकामतः प्रवृत्तस्य रेतस्सेकात् प्राङ् निवृत्तौ तप्तकृच्छ्रपराकसान्तपनानि द्रष्टव्यानि ।

"तप्तकृच्छ्रं पराकं च तथा सान्तपनं गुरोः ।
भार्यां वैश्यां सकृद्गत्वा बुद्ध्या मासं चरेद् द्विजः" ॥

इति स्मरणात् । अत्रोभयेच्छातः प्रवृत्तौ तप्तकृच्छ्रः । स्वेन प्रोत्साहितायां पराकः । तया प्रोत्साहने च सान्तपनम् । अत्रैवाकामतस्तदुभयेच्छातः प्रवृत्तस्य पञ्चसप्ताष्टरात्रं द्रष्टव्यम् ।

"पञ्चरात्रं तु नाश्नीयात् सप्ताष्टौ वा तथैव च ।
गुरोः शूद्रां सकृद्गत्वा बुद्ध्या विप्रः समाचरेत्" ॥ इति ।



तत्रैव कामतस्तदुभयस्येच्छातः प्रवृत्तौ प्राजापत्यं सान्तपनं सप्तरात्रोपवासात्मकं द्रष्टव्यम् । तदाह दीर्घतमाः—

"प्राजापत्यं सान्तपनं सप्तरात्रोपवासकम् ।
गुरोः शूद्रां सकृद् गत्वा चरेद्विप्रः समाहितः" ॥ इति ।

अनेनैव मार्गेणान्येषामपि वाक्यानां कल्पनीया व्यवस्था ।

स्त्रीविषये कात्यायनः—

"एष दोषश्च शुद्धिश्च पतितानामुदाहृतः ।
स्त्रीणामपि प्रसक्तानामेष एव विधिः स्मृतः ॥
छित्वा लिङ्गं वधस्तस्य सकामायाः स्त्रिया अपि" ॥ इति ।

अकामकृते द्वादशवार्षिकस्यार्द्धं ज्ञेयम्। स्त्रीणामर्द्धस्य विहितत्वात् । स्त्रीणां प्रायश्चित्ताचरणेऽरण्यवासादिकमसम्भवि ।

"वासो गृहान्तिके देय अन्नं वासः सरक्षणम्" ।

इति योगिस्मरणात् । प्रतिलोमजागमने संवर्तो विशेषमुक्तवान् ।

"शूद्रस्तु विप्रागमने गुरुतल्पव्रतं चरेत् ।
अज्ञानात् कामतो गत्वा प्राणान्तिकमिति स्थितिः" ॥ इति ।

अत्र वसिष्ठः—"वीरणैस्तृणविशेषैर्वेष्टयित्वा शूद्रमग्नौ प्रवेशयेत् । ब्राह्मण्याः शिरसि वपनं कृत्वा नग्नां गौरखरमारोप्य महापथमनुव्राजयेत्, पूता भवति । राजन्यस्य ब्राह्मणीगमने करवीरैर्वेष्टयित्वा राजन्यमग्नौ प्रवेश्य ब्राह्मण्याः शिरोवपनं कृत्वा नग्नां गौरखरमारोप्य महापथमनुसंव्राजयेत्, पूता भवति । वैश्यस्य ब्राह्मणीगमने करवीरैर्वेष्टयित्वा वैश्यमग्नौ प्रवेश्य ब्राह्मण्या वपनं कारयित्वा नग्नां श्वेत-

खरमारोप्य महापथमनुसंव्राजयेत्, शुद्धा स्यात्। एवं राजन्यायां वैश्यशूद्रयोरपि" इति।

योगी गुरुतल्पगातिदेशमाह—

"पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि।
मातुः सपत्नीं भगिनीमाचार्यतनयां तथा॥
आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः।
लिङ्गं छित्वा वधस्तस्य सकामाया अपि स्त्रियाः।
(१)अयमेव वधो दण्डः प्रायश्चित्तार्द्धमेव च"॥ इति।

नारद आह—

"माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा।
पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा॥
दुहिताचार्यभार्या च सगोत्रा शरणागता।
राज्ञी प्रव्रजिता साध्वी धात्री वर्णोत्तमा च या॥
आसामन्यतमां गच्छन् गुरुतल्पग उच्यते"॥ इति।

लिङ्गच्छेद एव दण्डो नान्योऽतिदुष्टेषु। एकरात्रादूर्ध्वमकामतोऽभ्यासे नववार्षिकम्। कामतोऽत्यन्ताभ्यासे मरणान्तिकम्, इति विवेकः।

व्याघ्रः साधारणस्त्रीविषये विशेषमाह—

"जात्युक्तं पारदार्यं च कन्यादूषणमेव च।
साधारणस्त्रियां नास्ति गुरुतल्पत्वमेव च"॥ इति।

(१) पद्यार्धमिदं याज्ञवल्क्यस्मृतौ नास्ते (३।२३२-२३३)।



## अथ संसर्गिप्रायश्चित्तम्।

यश्च महापातकिभिः संवत्सरं संविशति सोऽपि तत्समः। स च येन सह संसर्गं करोति तत्समं प्रायश्चित्तं कुर्यात्।

"यो येन पतितेनैषां संसर्गं याति मानवः।
स तस्यैव व्रतं कुर्यात्तत्संसर्गविशुद्धये"॥ इति मनुस्मरणात्।

"तत्संसर्गी तु पञ्चमः" इति साक्षान्महापातकित्वश्रुतेरतिदेशेऽपि द्वादशवार्षिकं कार्यम्, न मरणान्तिकम्। उपदेशादतिदेशस्याल्पत्वात्। तस्य च प्रायश्चित्तातिदेशस्यैव युक्तत्वात्। कथञ्चिन्महापातकित्वातिदेशेऽप्युक्तहेतोर्द्वादशवार्षिकस्यैव युक्तत्वादिति। इदं च व्रतं बुद्धिपूर्वविषयम्।

"पतितेन सहोषित्वा जानन् संवत्सरं नरः।
मिश्रितस्तेन सोऽब्दान्ते स्वयं च पतितो भवेत्"॥

इति देवलस्मरणात्।

अज्ञानतः संसर्गे उत्तरस्यां दिशि संहिताध्ययनं कुर्यात्। "पतितस्य तु योगे येभ्यः सकाशान्नाश उपलब्धस्तान् परित्यज्योदीचीं दिशं गत्वा संहिताध्ययनमधीयानः पूतो भवतीति विज्ञायते" इति वसिष्ठस्मरणात्।

ततश्च यद्यपि ब्रह्महादिषु कामतो मरणान्तिकमुपदिष्टम्। तथापि संसर्गिणस्तन्नातिदिश्यते "स तस्यैव व्रतं कुर्यात्" इत्यादिषु व्रतस्यैवातिदेशात्। प्रायश्चित्तं चात्र वस्तुगत्या द्वादशाब्दमेव न मरणान्तिकम्। कामकृते संसर्गिणो द्वादशवार्षिकमेव, अकामस्तु षडब्दमिति।

